॥ श्री जिनाय नमः ॥

# ॥ श्रीधर्मोपदेशकर्णिका ॥

छापी प्रसिद्ध करनार–पण्डित श्रावक हीरालाल हंसराज.

वीरसंवत्..................२४६५. । विक्रमसंवत्..................१९९५. सने..................१९३९.

जामनगरे जैनभास्करोदयमुद्रणालये मुद्रितम्.

कि. रु. १-४-०

# अस्मिन् ग्रंथे विषयानुक्रमणिका.



॥ श्रीजिनाय नमः ॥

॥ श्रीजिनाय नमः ॥

# ॥ अथ श्रीधर्मोपदेशकर्णिका प्रारभ्यते ॥

(आवृत्ति बीजी)

जिह्वाग्रे वर्तते लक्ष्मी-र्जिह्वाग्रे च सरस्वती ॥ जिह्वाग्रे बंधनं मृत्यु-र्जिह्वाग्रे परमं पदं ॥ १ ॥

अत्रोदाहरणं—वसंतपुरे सुदत्तनाम श्रेष्ठी, तस्य च सुदत्तानाम भार्या, तयोः पुत्रः श्रीदत्तः पंचवार्षिको जातः, तस्मिन् समये तस्य पिता मृतः, सुदत्ता परमदुःखविधुरापि निजसुतपालनायोद्यताभवत्. सप्तवर्षानंतरं तया स पुत्रो लेखशालायां मुक्तः, बह्वादरेण द्रव्यदानेन च पाठितः. क्रमेण स सकलकलाकुशलोऽभूत्. यौवनावसरे च स कस्याश्चित्कुलकन्यायाः पाणिग्रहणमकारि, परं कर्मवशतः सा वधूः कर्कशभाषिणी निष्ठुरा निर्लज्जा निस्त्रिंशा चासीत्. सर्वदा ते श्वश्रूवध्वौ कलिं कुर्वतः. अथैकदा जाया-

प्रेरितेन तेन सुतेन निजजनन्यै प्रोक्तं, रे जरति! त्वं सुखेनोपविष्टा भुंक्ष्व? कथमनया मे भार्यया सह कलिं करोषि? एवं स्वपुत्रदुर्वचनं श्रुत्वा सा कोपाद्गृहान्निर्गता, पुरासन्ने च कस्यांचित्प्रपायां स्थिता, ये पथिकाश्च तत्र समायांति तेषामादरेण सा नीरपानादिना भक्तिं कुरुते. तस्या वृद्धाया मिष्टवाक्यैश्च सर्वे जनाः संतोषं प्रापुः. एवं सा वृद्धापि कलेः शांतत्वात् तत्र सुखेन कालं गमयति, यतः–जे घरे कलह कलंतर वधे, लेखे आणी अलेखे रधे ॥ ते घर तुटे जाते काले । ए परमारथ कह्यो देपाले ॥ १ ॥ कपिकुलनखमुखविदलित–तरुतलनिपतितफलादनं हि वरं ॥ न पुनर्धनमदगर्वित–भ्रूभंगविकारिणी दृष्टिः ॥२॥ इत्यादि मत्वा सा स्वगृहं विसस्मार. अथैकदा शीतधर्मवर्षाणां त्रयाणामपि कालानामधिष्ठायकास्त्रयः सुरा मिलिता मिथश्च विवादं कुर्वंति, यथाहं वरः, अहं वर इति युध्यमानास्ते स्वर्लोकं गताः. तत्र सभोपविष्टेनेंद्रेणोक्तं, अस्माकं नाकलोके एकोऽपि कालो नास्ति, अतो युष्माभिर्मनुष्यलोके सभ्यजनाग्रे गत्वात्मस्वरूपं निवेदितव्यं, यतः स तु सहवासित्वेन शुभाशुभं वेत्ति, भवद्विवादं च स्फेटयिष्यति. ततस्ते त्रयोऽपि सुरा द्विजरूपं विधाय वसंतपुरंप्रति चलिताः, अंतराले च प्रपानिवासिन्या तया जरत्या प्रोक्तं,

भोः पथिकाः! युष्माभिः कथं युध्यते? यूयमत्रागच्छत? पानीयं च पिबत? यतः—स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्थिवत् शीतलं। पुत्रालिंगनवत्तथापि मधुरं बालस्य संजल्पवत् ॥ एलालांचिलवंगचंदनलसत्कर्पूरपूरे मिलत्। पाटल्युत्पलकेतकीसुरभितं पानीयमानीयतां ॥ १ ॥ एवंविधं पानीयं यूयं पिबत? पश्चादहं भवतोर्वादं स्फेटयिष्यामि. इति श्रुत्वा तस्या विनयादिगुणे रंजितास्ते वाडवरूपधारिणस्त्रयोऽपि देवास्तत्रैवागताः. ततः क्षणं विमृश्य तां जरतींप्रति शीतकालो जजल्प हे मातस्त्वं ब्रूहि? कीदृशोऽहं? शुभः अशुभो वा? तदा तयोक्तं हे पुत्र! त्वं श्रेष्टः, त्वत्समोऽन्यः कोऽपि न विद्यते, यतो भोगस्य कारणं शीतकालः. यस्मिंश्चागते सप्त तकारा भोगाय भवंति. यतः—तैलं वापनतांबूलं। तुली ताम्रमयी घटी ॥ तप्तभोज्यं तरुण्यंगं। शीते सप्त सुखा वराः ॥१॥ तत्श्रुत्वा स शीतकालदेवः संतुष्टो जातः. ततो ग्रीष्मेण पृष्टं, हे मातस्त्वं वृद्धा, सर्वेषां गुणागुणौ च जानासि, अतः कथय कीदृशो घर्मकालः? इति पृष्टे सा वृद्धा जजल्प, हे भ्रातः! हे पुत्र! त्वं ज्येष्टः, यतस्त्वयि समागते सर्वेऽपि तरवो नवपल्लवा भवंति, सहकारादि मनोऽभीप्सितफलानि च प्राप्यंते, सप्त चकाराश्च भोगाय भवंति. यतः—चंदनं चतुरद्वारं। चामरं

चीरचंद्रमाः ॥ चंपकं चतुरा नारी । ग्रीष्मे सप्त सुखावहाः ॥ १ ॥ एवमतिशयेन तया स्तुतः स ग्रीष्मः कालोऽपि गाढं जहर्ष. ततो लब्धावसरेण वर्षाकालेन प्रोक्तं, हे शुभवाक्यसुधासारिणि मातस्त्वं कथय? कीदृशोऽहं? तद्वचनं श्रुत्वा स्वशिरोधूननपूर्वकं सा जरती जगाद, हे पुत्र! त्वं तु सर्वोत्तमः, विश्वाधारादिबहुविरुदयुक्तोऽसि, तव गुणांश्च वक्तुं सुरगुरुरपि समर्थो न भवति, तदान्यस्य का कथा? परमात्मशक्त्या लेशमात्रं त्वद्गुणवर्णनं करोमि, तत्त्वं शृणु? भवदागमने च सप्त पकारा भोगाय भवंति, यतः— पीतांबरं पयः पद्मं । पादुका पूर्णमंदिरं ॥ पुराणं पद्मपत्राक्षी । प्रावृषि ते सुखावहाः ॥ १ ॥ इति तयोक्तं श्रुत्वा सोऽपि संतुष्टः; एवं च ते त्रयोऽपि परं संतोषं प्राप्ताः. ततस्तैः संतुष्टैस्तस्यै तिस्रः करंडिका दत्ताः, प्रोक्तं चैष्वेकस्मिन् देवदूष्यदुकूलमस्ति, द्वितीये त्वाभूषणानि संति, तृतीये च खंडखाद्यादीप्सितभोजनं वर्तते. इत्युक्त्वा तां च स्तुत्वा ते त्रयोऽपि स्वर्गं गताः. ततः सा स्थविरा तु हृष्टमनास्तां प्रपां विहाय स्वगृहंप्रति चचाल. परिहितदुकूला, नखाग्रतः केशांतमाभरणभारधारिणी समायांती सा वधूसंहितेन पुत्रेणान्यैर्जनैश्च दृष्टा. इतो हे मातर्हे मातरिति ब्रुवंस्तत्र बहुजनो मिलितः; सर्वैः सत्कृता सा सुखभाजनं

वभूव. राजादिसमग्रपौरजनानां च मान्या संजाता. एवं क्रमेण कतिचिद्दिनानि गतानि. अथ लोकैर्हसिता श्यामसुखी सा वधूर्विचारयति, श्वश्रूमापृच्छ्याहमप्येवंविधं करंडकत्रयमानयामि. इति मत्वा छद्मना नम्रीभूतया तया सा निजश्वश्रूः पृष्टा, हे मातर्युष्माभिरेते करंडकाः कथं लब्धाः? तद्वृत्तांतं यूयं कथयध्वं? यथाहमपि तदुपायं कृत्वैवंविधान् करंडकान् लभे. श्वश्रूः प्राह, हे स्नुषे! शृणु? वसंतपुरपरिसरे प्रपायां वारिदानेन देवा अपि तुष्यंति, एवं तत्र तुष्टैर्देवैर्मां तु वृद्धां स्थविरां मत्वा मह्यं करंडकत्रयं दत्तं. परं त्वं तु तरुणी सौंदर्यवत्यसि, अतस्तुभ्यं ते वहून् करंडकान् दास्यंति. एवंविधं श्वश्रूवचनं निशम्य सा सगर्वा निजभर्तारंप्रति जगाद, हे प्राणप्रिय! प्रपायां पथिकानां जलपानार्थं गंतुमहमुद्यता जातास्मि; अथ भर्त्रा निवार्यमाणापि कदाग्रहग्रहिला सा तत्र गता. तत्रापि लोकैरुक्तं, भो सुंदरि! नवयौवनतया तवात्र प्रपायां स्थातुं युक्तं न, एवं लोकैर्वाढं निवारितापि कदाग्रहपरा सा तत्रैव तस्थौ. अथ कियद्दिनानंतरं ते द्विजरूपधराः कालत्रयसुरा मिथः कलहायमानास्तत्रैवाजग्मुः, तत्र च तैस्तस्याः स्थविरायाः स्थाने सा समीचीना नवोढा सुंदरी दृष्टा. तैश्च तस्यौ पृष्टं सा स्थविरा कुत्र गता? तया भणितं सा तु

मदीयैव श्वश्रूरासीत्, किमर्थं पृच्छ्यसे? तैरुक्तं भो सुंदरि! तया तु पूर्वमस्माकं विवादः स्फेटितोऽभूत्. अधुनाप्यस्माकं विवादे जायमाने वयं तस्याः समीपे समागताः स्मः. सा प्राहाहं तस्या एव स्नुषा, अतः कथयध्वं मदग्रे युष्मत्कलहकारणं? यथाहमपि भवतां विवादं स्फेटयामि. तत् श्रुत्वा तेषां मध्यात् स शीतकालो जगाद, हे भगिनि! कीदृशः शीतकालः? तदा सा प्राह, भो द्विज! स दुरात्मा दुष्टः शीतकालस्तु स्थविरपथिकादीनां व्यथाकारकोऽस्ति, तस्य तु मुखमपि न विलोकनीयं, यतः स दुष्टस्तु शाद्वलान्यपि वनानि दहति, वारिमध्यगतानि पंकजानि चापि दहति. एवंविधानि तस्याः कुवचनानि श्रुत्वा स रुष्टः. ततो द्वितीयद्विजेन पृष्टं, अथ ग्रीष्मकालः कीदृशः? सा प्राह, स तु दुष्टो धर्मेण सर्वजनान् व्याकुलीकरोति, लूकया च मनुजान् मारयति, एवमतीवदुःसाध्यो विगतस्नेह उष्णकालोऽस्ति, तस्य च नामापि न श्रोतुं योग्यं, तत् श्रुत्वा स रुष्टः. तदनु तृतीयो द्विजोऽवक्, हे मातर्हे भगिनि! कीदृशो वर्षाकालः? तन्निशम्य सा स्वमुखं मोटयित्वोचे, भो महापुरुष! तस्य दुष्टस्य तु नामाप्यग्राह्यं, यतः स तु मलिनो बहुकर्दमाकुलभूमिकारकः, चिखिल्लश्च स बालवृद्धानां गमनायाऽयोग्यः, तस्मिंश्चागते पृथ्व्यपि

सकलात्रगुणसंपूर्णोऽसावप्रेक्षणीय एव. इति
वहुजीवाकुला भवति, पांथानामप्येष क्लेशकारकः, एवंविधः
श्रुत्वा सोऽपि रुष्टः. ततः क्रुद्धेनैकेन सा छिन्नघ्राणा कृता, द्वितीयेन तस्याः कर्णौ छिन्नौ, तृतीयेन च
महाकायो रौद्ररूपः सर्पस्तस्याः कंठे क्षिप्तः. एवं दुर्दशां प्राप्ता सा रुदंती गृहे समागता, सर्वनगरजनैश्चो-
पहसिता, भर्त्रापि च त्यक्ता. एवं कटुवाक्प्रसादतः सातीवदुःखिनी जाता. एवं श्वश्रूवधूदृष्टांतं निशम्य
हितार्थिभिर्जनैर्मधुरवचनानि वक्तव्यानि ॥ इति रसनोपरि कथा समाप्ता ॥

यद्दूरं यद्दुराराध्यं । यच्च दूरे व्यवस्थितं ॥ तत्सर्वं तपसा साध्यं । तपो हि दुरतिक्रमं ॥ २ ॥

तथाहि—इहैव भरते कुरुदेशे हस्तिनागपुरं नाम नगरं, तत्राश्वसेनाभिधो राजा, सहदेव्यभिधा च
तस्य राज्यासीत्. अन्यदा तयोश्चतुर्दशस्वप्नसूचितोऽतीवमनोहररूपवान् सनत्कुमारनामा पुत्रोऽभूत्. तस्य
सनत्कुमारस्य महेंद्रसिंहनामा सूरराजसुतो मित्रं बभूव. अथ स सनत्कुमारः क्रमेण सकलकलाकलाप-
कलित आसीत्. अथान्यदा स सनत्कुमारो यौवनारंभे वसंतोत्सवे स्वमित्रेण सह क्रीडार्थं वने गतः. तत्र

च स उत्सवकौतुकानि विलोकयति. अत्रांतरे केनाप्यश्वपतिना तस्मै सनत्कुमाराय प्रधानोऽश्व उपढौकितः; कुमारोऽपि तस्मिंस्तुरगेऽधिरूढः, परं तेन तुरगेण सोऽपहृत्य दूरे नीतः. अथ तस्य गवेषणार्थं नृपः सपरिकरस्ततश्चलितः, स्थाने स्थाने विलोकितोऽपि स न दृष्टः. ततस्तमश्वसेनं नृपं निवार्य तन्मित्रो महेंद्रसिंहः स्वमित्रगवेषणार्थं स्वयमेव चचाल, वर्षं यावच्च स महाटव्यां बभ्राम. अथैकदा सारसध्वनिं श्रुत्वा, मनोहरकमलगंधं चाघ्राय, मधुकरमधुरध्वनिं च शृण्वन् स यावदग्रे याति तावत्तेन सरोवरमेकं दृष्टं. तत्र सरोवरासन्ने च कदलीगृहे स्त्रीवृंदैरनुगम्यमानं सनत्कुमारं क्रीडंतं स ददर्श. ततोऽसौ बंदिमुखादेकं स्तुतिश्लोकं पठ्यमानमशृणोत्, यथा–कुरुदेशैकमाणिक्य–मश्वसेननृपांगजः ॥ श्रीमान् सनत्कुमारस्त्वं । जय त्रैलोक्यविश्रुतः ॥ १ ॥ इति श्लोकश्रवणेन तेन महेंद्रसिंहेन विमृष्टं, नूनमयमेव सनत्कुमारो ज्ञायते, इति विमृश्य यावत्सोऽग्रे विलोकयति, तावत्तेन स एव सनत्कुमारो विलोकित उपलक्षितश्च. ततो महेंद्रसिंहेन तस्मै प्रणामो विहितः. परस्परं च तयोर्महान् हर्षः संजातः. ततस्तेन सनत्कुमारेण स महेंद्रसिंहो भक्त्या भोजितः ततस्तेन निजमित्राय पृष्टं, मम मातापितरौ कथं वर्तेते? मित्रेणोक्तं महता कष्टेन, प-

रमथ ममात्मीयं वृत्तांतं कथय? कुमारेणोक्तं, भो मित्र! आयातीयं वकुलमत्यभिधा मम विद्याधरीप्रियां,
सा च प्रज्ञप्तिविद्याप्रभावाद्विज्ञाय मम सर्वमपि वृत्तांतं तवाग्रे कथयिष्यति. इत्युक्त्वा सनत्कुमारस्तु सुप्तः.
अथ सा वकुलमती प्राह, भो महेंद्रसिंह! त्वं शृणु? अथाश्वापहृतोऽयं कुमारो महाटव्यां पतितः, अथ
द्वितीयेऽपि दिने स तुरंगमस्तु तथैव धावितुं लग्नः. तृतीयदिने क्षुत्तृडाक्रांतः स तुरंगमो मुखनिर्गतजिह्वो
भूमौ पतितो मृतश्च. अथ तुरंगमादुत्तीर्णः कुमारोऽपि जलाऽप्राप्त्या भ्रांताक्षोऽचेतनीभूय भूमौ पतितः.
इतो वनस्थेनैकेन यक्षेण स जलैः सिक्तः सचेतनो जातः. अथ लब्धचैतन्येन तेन कुमारेण तं यक्षंप्रति
पृष्टं, भो यक्षराज! एवंविधं शीतलं जलमत्र कुत्र वर्तते? यक्षेणोक्तं भो कुमार! एतज्जलं मानसाख्ये
सरोवरे वर्तते. तदा कुमारः प्राह चेदहं तत्र स्नानं करोमि, तदा मे शरीरसंतापोऽपयाति. इति श्रुत्वा तेन
यक्षेण स कुमारो मानससरोवरे नीतः. तत्र च तेन स्नानं कृतं, अथ जलं पीत्वा यावत्स सरोवरपाल्या-
मुपविष्टस्तावत्पूर्वभववैरिणाऽसितयक्षेण स दृष्टः. तत्र च तेन यक्षेण सार्धं तस्य कुमारस्य युद्धं बभूव.
अत्रांतरे तेन महेंद्रसिंहेन सा वकुलमती पृष्टा, भो सुलोचने! तेन यक्षेण सह कुमारस्य वैरकारणं किं?

वकुलमती प्राह श्रूयतां? पूर्वं श्रीकांचनपुराभिधे नगरे विक्रमयशो नाम नृपः, तस्य च पंचशतराज्य आसन्. तत्रैव नगरे च नागदत्ताख्यः श्रेष्ठी वसतिस्म, तस्य विष्णुश्रीनामभार्या अतीवरूपवत्यासीत्. अथान्यदा राजपाटिकायां व्रजता तेन नृपेण सा श्रेष्ठीपत्नी दृष्टा, कामातुरो व्यामोहितश्च स तां गृहीत्वा स्वपट्टराज्ञीं चकार. अथान्यदा मात्सर्याच्छेपराज्ञीभिः कार्मणप्रयोगेण सा विष्णुश्रीर्व्यापादिता, तेन स राजातीवदुःखितो वभूव. मोहेन च स तस्याः शरीरस्याग्निसंस्कारं कर्तुं न ददाति. तदा प्रधानैर्मिलित्वा प्रच्छन्नं सा विष्णुश्रीर्बहिस्त्यक्ता. ततः स राजा जलान्नं त्यक्त्वा स्थितः. प्रधानैश्च तृतीयदिवसे तं नृपं दुःखितं दृष्ट्वा तस्मै तस्याः शवं दर्शितं. दुर्गंधयुतं तत्कलेवरं वीक्ष्य स राजा वैराग्येण चारित्रं गृहीत्वा तृतीयदेवलोके गतः. ततश्च्युत्वा स रत्नपुरे जिनधर्मनामा वणिग्वभूव. इतश्च स नागदत्तः प्रियाविरहार्त्तो मृत्वा सिंहपुरेऽग्निशर्माभिधो द्विजो जातः. कियता कालेन च स विप्रो त्रिदंडव्रतं जग्राह. तपः कुर्वाणश्च सोऽन्यदा राजगृहपुरे गतः, तत्र स नरवाहननृपेण पारणाय निमंत्रितः. इतः स जिनधर्माभिधो वणिक् तत्रागतस्तेन त्रिदंडिना दृष्टः पूर्ववैरं स्मृत्वा तेन त्रिदंडिना राज्ञोऽग्रे प्रोक्तं, हे राजन्! यद्यस्य श्रेष्ठिनः पृष्टस्थिततान्न-

स्याल्यां क्षीरान्नेन पारणं कारयसि तदा करोमि, नान्यथा. तदा राज्ञा तथैव कारितं, श्रेष्ठिनः पृष्टतश्चोष्ण-
क्षीरान्नदग्धा त्वगुत्तीर्णा, श्रेष्ठिना चिंतितं नूनमिदं मे पूर्वकृतकर्मण एव फलं मया लब्धं. ततः स श्रेष्ठी
जिनपूजां विधाय तुंगगिरिशिखरे मासं यावत्कायोत्सर्गं च विधाय शुभाराधनया मृत्वा सौधर्मेंद्रो जातः. स
त्रिदंड्यपि मृत्वा तस्यैवेंद्रस्य वाहनमैरावणहस्ती बभूव. ततश्च्युत्वा स त्रिदंडजीवस्तिर्यग्योनिषु भ्रांत्वाऽज्ञा
नतपसा असिताक्षयक्षो जज्ञे. ततः स इंद्रोऽपि च्युत्वा हस्तिनागपुरे सनत्कुमाराभिधश्चक्री बभूव. एतच्च
तयोर्वैरकारणं जानीहि? ततस्ताभ्यां यक्षकुमाराभ्यां महायुद्धं कृतं. लब्धलक्षेण कुमारेण स यक्षो मुष्टिना
हतस्ततो नष्टः; देवयोनित्वाच्च न मृतः. तदा विद्याधरैश्च तस्य कुमारस्योपरि पुष्पवृष्टिः कृता. अथ स
सनत्कुमारो यावदग्रे चलति; तावत्तेन भानुवेगाभिधविद्याधरस्याष्टौ कन्या दृष्टाः, ततस्तेन भानुवेगवि-
द्याधरेण ताः सर्वा अपि कन्या सनत्कुमाराय परिणायिताः. अथ विवाहानंतरमाबद्धकंकण एव स यावत्
किंचिज्जागरुकः सुप्तस्तावत्कुत्रचित्करुणस्वरं श्रुत्वा सोऽग्रे चलितः, इतस्तेन रत्नशृंगगिरावेकं भुवनं दृष्टं,
तत्रैकं दृप्तं विद्याधरं निर्जित्य करुणस्वरं रुदंतीं तां सुनंदाख्यस्त्रीरत्नं परिणीतवान्. एवं तत्र तं वज्रवेगवि-

याधरं जित्वा स कन्याशतं परिणीतवान्. इतश्च संग्रामसमये तस्य तत्र चक्ररत्नं समुत्पन्नं. एवं तस्यां बकुलमत्यां जल्पंत्यामेव स सनत्कुमारोऽपि गतनिद्रो जातः. ततोऽसौ महता परिवारेण युतो वैताढ्ये गतः. ततश्च मित्रप्रार्थनया स हस्तिनागपुरे समायातः. तं दृष्ट्वा तस्य मातापितरावत्यंतं प्रमुदितौ. इतस्तत्र तस्य नवनिधानानि समुत्पन्नानि. ततस्तेन भरतक्षेत्रस्य षट्खंडसाधनं कृतं.

अत्रांतरे सौधर्मेंद्रसभायामीशानदेवलोकात्संगमकाख्यो देवः समागतः. तस्यातीवतेजसा च सभायामुद्योतोऽभूत्. तदा देवैरिंद्रंप्रति पृष्टं, हे स्वामिन्नस्य देवस्य सदृशी प्रभा किं कस्यापि न विद्यते? इंद्रेणोक्तं हस्तिनागपुरनगरे मनुष्यरूपस्य सनत्कुमारचक्रिणोऽस्माद्देवादप्यधिका शरीरकांतिर्विद्यते. तत् श्रुत्वा तत्परीक्षार्थं द्वौ देवौ ततश्चलितौ. जरद्द्विजरूपौ च तौ तस्य चक्रिणो गृहे समागतौ. तदा चक्रिणा तयोः पृष्टं, युवां कौ? कुतश्चात्र समायातौ? तावूचतुरावां द्विजौ भवदीयरूपविलोकनार्थमत्र समेतौ स्वः. चक्रिणोक्तमधुना तैलाभ्यंगिते मम देहे सुंदरं रूपं नास्ति, अतः सभायामागत्य मदीयालंकृतशरीरस्य रूपं युवाभ्यां विलोकनीयं. तत् श्रुत्वा तौ देवौ ततो गतौ. अथ स्नानानंतरं विभूषितशरीरे चक्रिणि सभायां

सिंहासने समुपविष्टौ तौ द्विजरूपधरौ देवौ तद्रूपविलोकनार्थं तत्र समेतौ. तदा तद्रूपविलोकनेन तौ विलक्षौ श्यामवदनौ च जातौ. तदा चक्रिणा पृष्टं, भो द्विजोत्तमौ! मदीयं रूपं विलोक्याधुना युवां कथं श्यामास्यौ जातौ? तावूचतुर्भो राजन्! अधुना रोगाक्रांतशरीरस्य तव रूपभ्रंशो विलोक्यते. चक्रवर्तिरूचे, युवां तत्कथं जानीथः? तावूचतुर्देवत्वेन. ततस्तौ देवौ प्रत्यक्षीभूय तस्य प्रशंसां च विधाय स्वस्थानं जग्मतुः. अथ वैराग्यपरेण चक्रिणापि विमृष्टं, नूनं रूपयौवनादि क्षणविनश्वरमेव. ततः किमनेन पापहेतुराज्येन! इति विचार्य तेन चक्रिणा श्रीविनयंधराख्यगुरोः समीपे दीक्षा गृहीता. गीतार्थः सन्नेकाकित्वेन प्रतिमादितपःपरः स विजहार. कृतषष्ठाष्टमादितपा गोचरचर्यायां परिभ्रमन् लुक्षाहारपरोऽसावेकदा तक्रं लब्धवान्. अथैवंविधकदर्याहारेण तस्य शरीरे सप्त व्याधयः समुत्पन्नाः, यथा—शुष्ककच्छुज्वरश्वासाः । कासश्चान्नारुचिस्तथा ॥ अक्षिदुःखं दंतदुःखं । सप्तैतेऽत्यंतदारुणाः ॥ १ ॥ एवं सप्तविधरोगदुःखं स सप्तवर्षशतानि यावदसहत. वैराग्ययुतः स राजर्षिर्निजव्याधिप्रतीकारं न करोति. अथान्यदा पुनरपींद्रेण सभासमक्षं तस्य वैराग्यप्रशंसा कृता. तदा द्वौ देवौ तत्परीक्षार्थं वैद्यरूपं विधाय तस्य राजर्षेः समीपं समुपागतौ. तं नत्वा च ताभ्यां

कथितं; भो मुने! आवां त्वदीयरोगचिकित्सां कर्तुमिच्छावः. मुनिनोक्तमहं मे बाह्यरोगस्य प्रतीकारं नेच्छामि; केवलमंतरंगरोगचिकित्सामेवाहं वांछामि. ताभ्यामुक्तं तत्त्वावां न बोधावः. तदा मुनिनोक्तं बाह्यरोगचिकित्सां त्वहमपि जानामि, इत्युक्त्वा तेन मुनिना कुष्टाभिभूता निजांगुलिरेका स्वश्लेष्मणा विलिप्य रोगरहिता स्वर्णवर्णा कृता. तद् दृष्ट्वा तस्य प्रशंसां विधाय तौ देवौ स्वस्थाने प्राप्तौ. अथैवं तपसैव क्षीणशरीरः स राजर्षिः शुभध्यानपरः कालं विधाय तृतीयदेवलोके गतः.

॥ इति तपोविषये राजर्षिश्रीसनत्कुमारचक्रिदृष्टांतः ॥



तपः सर्वाक्षसारंग–वशीकरणवागुरा ॥ कषायतापमृद्वीका । कर्माजीर्णहरीतकी ॥ १ ॥

अत्रापि तपोविषये दृष्टांतो यथा–अत्रैव भरतक्षेत्रे कुसुमपुरनाम नगरं, तत्र च नागचंद्रनामा श्रेष्ठी निवसतिस्म. तस्य च नागदत्तनामा सुपुत्रः, यतः–विनीतः सततोत्साही । मातृपितृप्रियः सुधीः ॥ पुण्यवान् वररूपाढ्यः । सुतो भाग्येन जायते ॥ १ ॥ अथान्यदा तेन नागदत्तेन जिनभुवने केनापि भाग्यवता धर्म-

परेण कारिता श्रीजिनेंद्रप्रतिमापूजा दृष्टा. तदा हृष्टेन तेन निजजनकायोक्तं, हे तात! अहमपि निजभुजाभ्यां धनमर्जयित्वैवंविधां श्रीजिनेंद्रपूजां करिष्यामि. पित्रा तु तं बालं विज्ञाय न किंचिदपि प्रत्युत्तरितं. अथ द्रव्यार्जनाय देशांतरगमनोत्सुकः स नागदत्तस्तु निजहट्टे समुपविष्टः. इतः कश्चिदेको ब्राह्मणः पंचशतमूल्येन श्लोकैकविक्रयोत्सुकस्तत्र समागतः, स च श्लोको यथा—अकर्तव्यं न कर्तव्यं । प्राणैः कंठगतैरपि ॥ कर्तव्यमेव कर्तव्यं । प्राणैः कंठगतैरपि ॥ १ ॥

अथ स नागदत्तः पंचशतद्रम्मव्ययेन तं श्लोकं ततो ब्राह्मणादग्रहीत्. इतस्तत्र समागतेन पित्रा क्रोधेन सोऽत्यर्थं तर्जितः. एवं पित्रापमानितः स नागदत्तः पंचशतप्रवहणैः सह समुद्रयात्रार्थं चचाल. अथ कियंति दिनानि यावत्तानि प्रवहणानि समुद्रमध्ये प्रचेलुः. इतोऽकस्मात् तानि सर्वाण्यपि प्रवहणानि भुजंगवलयपर्वतकुंभिकायां पतितानि. इतश्चिंतातुरेण तेन नागदत्तेनाग्रेऽपि तत्रैव कुंभिकायां पतितं प्रवहणमेकं दृष्टं. तदा स नागदत्तस्तस्मिन् प्रवहणे गतः. तत्र च तेनैकः पुरुषो मरणांतदशां प्राप्तो दृष्टः, नागदत्तेन स पुरुषोऽनशनपूर्वकं नमस्कारदानेन निर्यामितः. अथ तत्र भुजंगवलयपर्वते सुवर्णद्वीपाधिपति-

सुंदराख्यनृपतिपालिताः पंचशतशुका निवसंति. अथ तत्र कुंभिकायां यः कोऽपि कष्टे पतति, तद्वृत्तांतं तन्मध्यादेकः शुको नृपाग्रे समेत्य निवेदयति, परमकृपालुः स सुंदरनृपश्च तत्कष्टभंजनोपायं करोति. अथैकदा तेन नागदत्तेन प्रवहणागतस्यैकस्य शुकस्य पादे निजकष्टोदंतचिट्ठिका बद्धा. ततः स शुकोऽपि चिट्ठिकायुतः सुंदरनृपपार्श्वे गतः. तच्चिट्ठिकावृत्तांतं वाचयित्वा दुःखितो राजा भोजनमपि न करोति. ततस्तेन राज्ञा नागदत्तकष्टनिवारणार्थं निजनगरमध्ये पटहोद्घोषणा कारिता. तदा तत्र वास्तव्येनैकेन वृद्धनाविकेन स पटहः स्पृष्टः, निवेदितं च तेन राज्ञे, हे स्वामिन्नहमुपायेन समुद्रमध्ये गत्वा भुजंगवलयकुंभिकामध्यात्तं कष्टे पतितं पुरुषं निष्काशयिष्यामि. हृष्टेन राज्ञा तस्मै नाविकाय लक्षसुवर्णं प्रदत्तं. अथ स वृद्धनाविकोऽपि प्रवहणस्थितस्तत्र भुजंगवलयपर्वतद्वारे प्राप्तः. तत्र तेन तं प्रवहणस्थितं नागदत्तंप्रति कथितं, यदि भवतां मध्यात्कोऽपि साहसं कुर्यात्तदैतानि प्रवहणानि कुंभिकामध्याद्बहिर्निस्सरंति. तदा स नागदत्तस्तं वृद्धनाविकंप्रति जगाद, कथंविधं साहसं विधेयं? नाविकेनोक्तमस्य भुजंगवलयपर्वतस्योपरि इंद्रनीलमणिमयप्रासादे मणिमयं श्रीनेमिनाथजिनेश्वरस्य बिंबं वर्तते, तस्मिन् प्रासादे च महत्प्रमाणा

ढक्काः संति; अथ यः कोऽप्यमुं वटवृक्षमवलंब्य पर्वते च गत्वा ता ढक्का वादयेत्, तदा तासां नादभीताः कोटिसंख्याका भारंडपक्षिण उत्पतिष्यंति, तेषां पक्षवातप्रेरितानि चामूनि प्रवहणानि मार्गे चलिष्यंति. तेनेत्युक्ते स नागदत्तो नाविकान्प्रति प्राह, यः कोऽपि तत्र याति, तस्याहं लक्षसुवर्णं यच्छामि, परं मृत्युभयात्तत्र गंतुं कोऽपि नेच्छत्. तदा स नागदत्तो लोकानामुपकारं विचिंत्य साहसैकधीरो वटशाखामवलंब्य स्वयमेव तत्र जगाम. तत्र जिनप्रासादे गत्वा प्रभुं च नमस्कृत्य ताः सर्वा अपि ढक्का वादयामास. तासां नादेन भीता भारंडपक्षिणस्तत उत्पतिताः, तेषां पक्षवातप्रेरितानि सर्वाण्यपि प्रवहणानि मार्गे लग्नानि. अथ नागदत्तेन तत्र स्वयं सामायिकमादायाष्टाह्निकातपः प्रत्याख्यातं. अत्रांतरे तत्रैकश्चारणमुनिरुपागतः, तदा हृष्टो नागदत्तस्तं मुनिं महाभक्त्या प्रणिपत्योवाच, भगवन्! मेऽनशनं दीयतां? तदा मुनिरुवाच, भो महाभाग! अद्यापि भवतो भोगफलं कर्म विद्यते. इतस्तत्रैको विद्याधरः समायातः, सोऽपि तं चारणमुनिं नमस्कृत्य तत्रोपविष्टः. मुनिनापि तस्मै धर्मोपदेशो दत्तः, प्रतिबुद्धेन तेन विद्याधरेण मांसभक्षणप्रत्याख्यानं कृतं. ततः स चारणमुनिर्गगनमार्गेणोत्पतितः. ततो हृष्टेन तेन विद्याधरेण निजपुत्री तेन

नागदत्तेन सह तत्र परिणायिता. तथा सूरि विद्यामंत्रौषधीद्रव्यस्वर्णरत्नादिकं तेन तस्मै नागदत्ताय दत्तं. ततो विमानं रचयित्वा निजपुत्रीयुतं तं नागदत्तं च तत्र संस्थाप्य स तस्य गृहे मुमोच. तत्र स नागदत्तो मातापित्रोर्मिलितः, परस्परं च महानंदो जातः. तानि प्रवहणान्यपि तत्र सुखेन समायातानि, वर्धापनादिकं बभूव. ततस्तेन नागदत्तेन तत्र जिनप्रासादः कारितः, तत्र च जिनप्रतिमा स्थापिता. तत्र स त्रिकालं जिनपूजनं करोति, विविधां च जिनपूजां रचयति, नानाविधानि पुण्यकार्याणि च करोति. इत्यष्टाह्निकातपोविषये श्रीनागदत्तकथानकं संपूर्णं. ॥ ३ ॥



विपद्य वपुषः पीडां । धूर्ताः सौख्यमभीप्सवः ॥ परलक्ष्मीं परस्त्रीं च । विलसंति क्षतांगवत ॥ १ ॥

सूर्यपुरे रत्नाकरनामा श्रेष्ठी भृशं धनिकोऽभूत्. अथैकदा प्रकटधनभीतेन तेन व्यवसायातिरिक्तधनगुप्तये निजसुतः प्रोक्तः, यतः—अर्थानामर्जने दुःख—मर्जितस्यापि रक्षणे ॥ नाशे दुःखं व्यये दुःखं । धिगर्थोऽनर्थभाजनं ॥ १ ॥ ततस्तौ द्वावपि पितापुत्रौ बहुधनं लात्वा शून्ये श्मशाने गतौ. तत्र सुतो भुवं

खनित्वा यावत्तमर्थं तत्र निःक्षिपति, तावत्तस्य पित्रा प्रोक्तं, भो सुत! धनलोलुपा धूर्ताः सर्वत्र भ्रमंति, अतो मन्मनोऽधीरं, अतस्त्वं सर्वतो विलोकय? ततः पुत्रेण यावत्परितो विलोकितं तावन्नातिदूरमेकं पुरुषमृतकं विना तत्र न कोऽप्यन्यो दृष्टः. तन्मृतकवृत्तांतश्च निजपित्रे तेन कथितः. तदा जनकेन तज्जीवनशंकया पृथक् पृथक् तस्य कर्णद्वयनक्कच्छेदनं च सुतपार्श्वात्कारितं. तथापि स धूर्तशिरोमणिर्निरुद्धश्वासो निश्चेष्टः काष्ठवदेव स्थितः. तेन धूर्तेनार्थलोभात्कंठच्छेदनावधि साहसं कृतं. ततस्ताभ्यां पितापुत्राभ्यां निःशंकमेव तत्र निजधनं गुप्तीकृतं. अथ गृहं गतयोस्तयोस्तेन धूर्तेनोत्थाय शीघ्रमेव तत्सकलमपि धनं भूमितः कर्षितं, चिंतितं च श्रवणनक्काभ्यां हीनोऽपि धनिकस्तु पूज्यत एव. ततोऽसौ तद्धनव्ययेन वेश्यादिभिः सह विललास. अथैकदा तेन रत्नाकेंण श्रेष्ठिना तद्धनाकर्षणाय तां भुवं खनित्वा यावत्स गर्तो विलोकितस्तावत्तेन धनरहितो रिक्तो दृष्टः. तदा तत्रैव मूर्छां प्राप्य स भृशं विललाप. ततोऽसौ तन्निजधनं नष्टं निश्चित्य गृहे पश्चादागतश्चिंतयति, नूनं तेनैव कर्तितनक्ककर्णेन धूर्तेन स्तेनेन मदीयं तद्धनं गृहीतं संभाव्यते. ततः स श्रेष्ठी वेषांतरं विधाय तत्पुरुषगवेषणार्थं पुरमध्ये भ्रमतिस्म. कियद्भिर्दिनैश्च तेन स

एप छिन्ननकर्णः पुरुषो गणिकागृहे विलसन् दृष्टः. राजपुरुषैर्धारयित्वा स श्रेष्ठी तं धूर्तशिरोमणिं राजसभायां नीतवान्. राज्ञा पृष्टेन तेन धूर्तेन विहस्योक्तं, राजन्! मया तद्धनं मुधैव गृहीतं नास्ति, परं मम कर्णनाशिके दत्वैव मया तद्गृहीतमस्ति, अतः प्रथमं श्रेष्ठी चायं मे कर्णनाशिका अर्पयतु, यथाहं तद्धनमपि पश्चादर्पयामि. इत्युक्त्वा तेन धूर्तेन सकलोऽपि निजवृत्तांतः सत्यरूपेण राज्ञोऽग्रे निवेदितः, तस्य सत्यवादेन हृष्टो राजापि तं विमुच्य सन्मानयामास. ॥ इति धूर्तकथा ॥

गोरवं विभवाज्जाते । विभवो बुद्धिसंभवः ॥ तदत्ययाद्धनः श्रेष्ठी । खेदमासेदिवान् पुरा ॥ १ ॥

चंपायां नगर्यां धनाढ्यः श्रेष्ठी बभूव. तस्य मदनाख्यश्च सुतोऽभूत्. एकदा स मदनो निजमित्रयुतो विपणश्रेण्यां गतः, तत्रैकं हट्टं क्रयाणकरहितं सुधालिप्तं मनोहरं देवगृहोपमं धनिकाश्रितं दृष्ट्वा स विस्मितः. ततस्तेन स्वमित्रंप्रति पृष्टं, भो मित्र! इदं हट्टं क्रयाणकरहितं केवलमेकधनिकाश्रितं मनोहरं च कथं दृश्यते? मित्रेणोक्तं भो मदन! इदं तु बुद्धिहट्टं कथ्यते, अत्र स्थितोऽयं धनिको द्रविणं गृहीत्वा केवलं

ततो धनिकादेका बुद्धिः क्रीता, मदनेन पंचशतद्रम्मदानेन
बुद्धिमेव विक्रयति. तत् श्रुत्वा विस्मितेन तेन समागतः. तदा स मित्रैरहस्यत.
यथा–यत्र द्वौ कलहायतस्तत्र न स्थेयं. एवंविधां बुद्धिं लात्वा स स्वहट्टे तदा तेन मदनकृतव्यापारकार्यादिकं
एवं तन्मित्रप्रहसनं विलोक्य जातशंकेन जनकेन तत्कारणं पृष्टं, तस्य लुब्धस्य धूर्तस्य
कथितं. तन्निशम्य रोषारुणः स श्रेष्ठी कुवचनैस्तं स्वपुत्रं तर्जयामास, यथा–रे दुष्ट! वाक्य–वाणैर्विव्याध बुद्धिदं ॥ एवं-
पाशे त्वं कथं पतितः? त्वया मुधैव धनव्ययः कृतः तत्र गत्वा ततो बुद्धिदायकं धनिकं भृशं निर्भर्त्सयामास.
विधगिरा मुग्धान् । प्रतारयसि वंचक ॥ १ ॥ एवं स धनश्रेष्ठी तं पश्चादर्पितं. अथैकदा तेन मदनेन
ततस्तेन बुद्धिदेन धनिकेन शपथदानपूर्वकं तां बुद्धिं लात्वा तस्य धनं मार्गे दृष्टौ, तद्विलोकनकौतुकी स
स्वमित्रगृहं गच्छता द्वौ राजमान्यौ पुरुषौ मुष्टामुष्टिपूर्वकं कलहायमानौ पार्श्वे नीतौ. तदा न्यायकरणार्थं
मदनोऽपि तत्र स्थितः. ततस्तत्र संगतलोकैस्तौ द्वावपि पुरुषौ बलाद्राज्ञः मदनः साक्षी वर्तते. ततो ॥ २१ ॥
राज्ञा प्रोक्तमेतत्कलहविषयेऽस्ति किं कोऽपि साक्षी? लोकैरुक्तं धनश्रेष्ठीपुत्रो क्षुब्धः श्रेष्ठी तस्यैव बुद्धिदस्य
राज्ञादिष्टाः सुभटास्तस्य मदनस्याकारणार्थं धनश्रेष्ठिगृहे प्राप्ताः. तान् दृष्ट्वा

धनिकस्य शरणं गतः प्रोक्तं च तेन तस्य, भो मित्र! अथाधुना पाहि पाहि मत्कुटुंबादि? ततस्तेन बुद्धिदेन कोटिमूल्यं याचितं. तदा चिंतातुरेण तेन धनश्रेष्ठिना तस्मै कोटिमितमपि द्रव्यं दत्तं. तदा तेन धनिकेनापि तस्मै बुद्धिर्दत्ता, यथा—अथ त्वं स्वसुतं ग्रथिलीकुरु? ततस्तथैव करणेन स मदनस्तस्मात्संकटान्मुक्तो बभूव. क्रमेण च सुखी जातः. ॥ इति बुद्धेरुपरि धनश्रेष्ठिपुत्रमदनकथा ॥



अथ देवद्रव्यभक्षणविषये भ्रातृद्वयकथा यथा—विश्वपुरे क्षेमंकराभिधो राजाभवत्. तस्य युगंधराख्यश्च पुत्रोऽभूत्. अथैकदा स युगंधरो वनमध्ये गतः. तदा तत्र कस्यापि मुनेः केवलज्ञानोत्पत्तिर्बभूव. तदा तत्रागतैर्देवगणैः क्रियमाणं तत्केवलज्ञानमहोत्सवं दृष्ट्वा जातजातिस्मृतिः स युगंधरकुमारो देवतार्पितमुनिवेषः प्रवव्राज. तदा राजादयश्च तद्वंदनाय तत्रागताः. तावत्तत्र कुष्टव्याधिप्रभृतिरोगार्त्तः समस्तदुःखपात्रं च कश्चिदेको रोरपुरुषोऽपि समागतः. तदा राजादयो लोकास्तस्य रोरपुरुषस्य पूर्वभववृत्तांतं केवलिने पृच्छतिस्म. तदा स केवली प्राह, कुसुमपुराभिधे नगरे नंदनागदेवाभिधौ द्वौ श्राद्धौ भ्रातरावभूतां. तयोर्नंदो

अपरो नागदेवोऽपि तथैव निजनिर्वाहं करोति,
व्यवहारशुद्धो न्यायोपार्जितद्रव्येण स्वाजीविकां करोति. अपरो नागदेवोऽपि तथैव निजनिर्वाहं करोति,
परं तस्य स्वभावः किंचिल्लोभयुतोऽभूत्. अथ तौ द्वावपि परमश्राद्धौ पापभीरू विज्ञाय तन्नगराधिपेन स्वका-
रितजिनमंदिरे देवद्रव्यरक्षणार्थं नियुक्तौ. एवं तौ द्वावपि शुभभावेन देवद्रव्यरक्षणं कुरुतः. अथान्यदा
पूर्वबद्धांतरायकर्मदोषेण नागदेवः क्षीणधनो बभूव, तेन सोंतरांतरा स्वल्पं देवद्रव्यं भुंक्ते. तदर्थं वृद्धभ्रात्रा
नंदेन निवारितोऽपि स नामन्यत. तदा नंदेन चिंतितं, एतद्वृत्तांतं प्रातर्भूपाय निवेदयिष्यामि. इति
चिंतयन्नेव स नंदोऽकस्मादुत्पन्ने शूलरोगेण रात्रौ मृत्वा व्यवहारिणः सुतो बभूव. ततश्च्युत्वा स प्राणत-
कल्पे देवो जज्ञे. ततो मनुष्यत्वं प्राप्य सप्तभवेषु दीक्षामाराध्यायं युगंधरमुनिर्जातोऽस्ति. अस्मिन्नेव भवे
च स सिद्धिं यास्यति. अथ स नागदेवस्तु तस्मिन्नेव भवे षोडशरोगयुतो बभूव, पश्चात्तापेन स स्वगृहस-
र्वस्वं भक्षितदेवद्रव्यपदेऽर्पितवान्. मरणसमये च शेषद्रव्यार्पणाय स निजसुतेभ्यः कथितवान्. ततो मृत्वा
स नागदत्तजीवश्चिरकालं नरकादिषु भ्रांत्वायं महारोगी रोरो जातोऽस्ति. एवंविधं केवलिप्रोक्तं निजवृत्तांतं
निशम्य स रोरोऽपि जातिस्मरणमवाप. ततः स निजपापमालोच्य केवलिपार्श्वे व्रतं जग्राह, अनशनं च

विधाय सोऽच्युतदेवलोके देवोऽभवत्, ततश्च्युत्वा स महाविदेहे सिद्धिं यास्यति. ॥ इति देवद्रव्यभक्षणविषये भ्रातृद्वयकथा समाप्ता ॥ ६ ॥

एकदेवाश्रितं धर्मं । निश्चयान्न करोति यः ॥ स धारचंडवन्मूर्खो । भवपूरेण नीयते ॥ १ ॥

नंदिपुराभिधे नगरे कश्चिद्दरिद्रो द्विजः संततिरहितोऽभूत्. स एकदा चिंतयति, मम द्रव्यसंततिशून्यस्य मानुष्यकं निरर्थकमेव. ततोऽसौ स्वकुलक्रमागते धारचामुंडाख्ये देव्यावाराध्य सुतमेकं लब्धवान्. तस्य स सुतश्च क्रमेण गृहस्वामी जातः. अथैकदा ग्रीष्मात्यये कापि ग्रामे गच्छन् सोंतराले नद्यामेकायां प्रविष्टः. इतश्च जलपूरेण प्रवाहितोऽसौ धारचामुंडाख्यदेवीद्वयं स्वतारणार्थं स्मृतवान्. तदा ते द्वे अपि देव्यौ तत्र समागते, परं द्वयोः स्मरणेनैकया चिंतितं द्वितीयैनं तारयिष्यति, तथैव द्वितीयापि चिंतितं परैवैनं तारयिष्यति. एवं ताभ्यामेकयापि स नदीपूरान्न निस्तारितः, ततश्च स तत्र जलमग्नो मृतः.

॥ इत्येकधर्माश्रये धारचामुंडकथा समाप्ता ॥ ७ ॥

वाग्याडंबरिभिर्भाव्यं । मूर्खैरपि निरंतरं । आडंबरात्पुरा जिग्ये । किं विवादी न चक्रिणा ॥ १ ॥

रत्नपुराभिधे नगरे महीपालाभिधो राजाभूत्. तस्य सभायां बहवो विद्वांसोऽभूवन्. अथैकदा पंचशततुरगान्वितो निःस्वानकुद्दालनिःश्रेणिकाछत्रचामराद्याडंबरयुतः कश्चिद्वादी विद्यावादार्थं समागतः. एवंविधं तं वादिनं समागतं श्रुत्वा तत्रस्थाः केचिद्विद्वांसो नंष्ट्वा परग्रामं याताः, केचिच्च प्रच्छन्नं गुप्तगृहे स्थिताः. अथ निजसभाकलंकभीरुणा नृपेण तेन वादिना सह विवादकरणार्थं निजनगरमध्ये पटहो वादितः. तदा केनचिन्मत्तपुष्टेन काणैकाक्षियुतेन तैलिकेन स पटहः स्पृष्टः. तदा राज्ञापि स तैलिकः सुखासनासीनः शंखादिध्यानपूर्वकं महाडंबरेण निजराजसभायामानीतः. अथ गौरदेहं जनैः परिवृतं महाडंबरधरं तं तैलिकं दृष्ट्वा स विदेशीयो वादी स्वमनसि क्षोभं प्राप्तः. ततः सभासमक्षं तेन वादिना परीक्षार्थं तस्य तैलिकस्य सन्मुखं निजैकांगुलीकोर्ध्वीकृता, तद् दृष्ट्वा तेन तैलिकेन निजांगुलिद्वयमूर्ध्वीकृतं. तदा तेन वादिना सक्रोधः पंचाप्यंगुलय ऊर्ध्वीकृताः; तदा रुष्टेन तेन तैलिकेन निजमुष्टिबंध ऊर्ध्वीकृतः. तद् दृष्ट्वा स वादींद्रश्चिंतयति, नूनं सत्यं तत्वं स्वयमेव विद्वान् वेत्ति. अनेनाहं जितः, इति विचिंत्य स निजासनं त्यक्त्वा

तस्य तैलिकस्य पादयोः पतितः, कथयामास च सभासमक्षं, हे राजन्! भवतामयं पंडितः सत्यतत्त्ववेत्तास्ति, एवंविधसूक्ष्मवादेऽप्यहमेतेन पराजितः. तदा राज्ञा पृष्टं कथमनेन मदीयपंडितेन त्वं पराजितः? इति निशम्य तेन वादींद्रेणोक्तं, मयैकांगुल्यूर्ध्वीकरणेनैक एवेश्वर इति संज्ञितं, तदानेन युष्मदीयपंडितराजेन निजांगुलिद्वयमूर्ध्वीकृत्य संज्ञितं यदेक इश्वरो द्वितीया च शक्तिरिति द्विगुणात्मकं तत्त्वमस्तीति. ततो मया पंचांगुल्यूर्ध्वीकरणतः पंचेंद्रियाणीति संज्ञया प्रोक्तं, तदानेन पंडितशिरोमणिना निजमुष्टिमूर्ध्वीकृत्य मह्यं ज्ञापितं, यथा पंचाप्येतानींद्रियाणि यमनियमादिभिर्गोप्यानीति. इत्युक्त्वा निजसर्वस्वं मुक्त्वा स वादींद्रस्ततः पलायितः. अथ तद्गमनानंतरं राज्ञा तस्मै तैलिकाय पृष्टं, भो तैलिकराज! त्वया कथं स वादींद्रः पराजितः? तदा तेनैकाक्षिणा तैलिकेनोक्तं स्वामिन् तेन वादिना निजैकांगुल्यूर्ध्वीकरणतो मदीयशेषैकाक्षिस्फोटनायोक्तं, तदा मया निजांगुलिद्वयमूर्ध्वीकृत्योक्तं नूनमहं त्वदीयचक्षुर्द्वयमपि स्फोटयिष्यामि. ततोऽसौ पंचांगुल्यूर्ध्वीकरणतो मां चपेटां दातुमुद्यतोऽभूत, तदा मया मुष्टिमुद्गम्य तस्मै ज्ञापितं, यथानेन मुष्टिप्रहारेणाहं तव जीवितमपि लास्यामीति. एतत्तैलिकोक्तं निशम्य राजादयः सर्वेऽपि सभाजनाः

सानंदाश्चर्येण हसितुं लग्नाः. ततो राज्ञा स तैलिको वस्त्राभूषणादिभिः सत्कृत्य निजगृहे प्रेषितः.

॥ इत्याडंवरे तैलिककथा समाप्ता ॥



॥ अथ सत्पात्रदाने शातवाहननृपकथा प्रारभ्यते ॥

मीनानने प्रहसिते भयभीतमाह । श्रीशातवाहनमृपिर्भवतात्र नद्यां ॥ यत् सक्थुभिर्मुनिरकारि सुपारणं द्राक् । दैवाज्जयंतमुपलक्ष्य झपो जहास ॥ १ ॥ प्रतिष्ठानपुराभिधे नगरे शातवाहनाभिधो राजाभूत्. अथैकदा स राजा राजपाटिकायां वने परिभ्रमन्नेकस्या नद्यास्तटे समायातः. तत्र नद्यामेकं मत्स्यं हसंतं दृष्ट्वाऽरिष्टभीतो नगरमध्ये समागत्यैकं ज्ञानिनंप्रति तस्य मत्स्यस्य हास्यकारणं पप्रच्छ. तदा स ज्ञानी मुनिः प्राह, भो राजन्! पूर्वं द्वावपि बांधवौ द्रव्यार्जनाय देशांतरंप्रति प्रस्थितौ. क्रमेण चलंतौ तस्या नद्यास्तटे समायातौ. तयोः पार्श्वे शंवलार्थं सक्थवोऽभूवन्. इतः कोऽपि मासक्षपणतपस्वी मुनिस्तत्र समायातः. तदा तयोरेकेन भ्रात्रातीवभावपूर्वकं निजभागार्धसक्थवस्तस्मै मुनये निमंत्रणपूर्वकं समर्पिताः; अपरेण च

कार्पण्यात्किंचिदपि तस्मै मुनये न समर्पितं. एवं स मुनिदानदाता भ्राता ततो मृत्वा दानप्रभावात्त्वं शातवाहनाख्यो राजा जातः. स कृपणभ्रातापि ततो मृत्वायं मत्स्यस्तस्यामेव नद्यां समुत्पन्नः. संप्रति च त्वां दृष्ट्वा तस्य मत्स्यस्य जातिस्मरणज्ञानं समुत्पन्नं. अतस्तव प्रतिबोधाय स मत्स्यो जहास. एवं मुनिप्रोक्तं वृत्तांतं निशम्य स शातवाहनो राजा भृशं प्रमोदं, प्राप्तो धर्मध्यानपरो जातः. ॥ इति सत्पात्रदाने शातवाहननृपकथा समाप्ता. ॥ ९ ॥

पृथ्वीपीठाभिधे नगरे कनकभ्रमाख्यो राजा राज्यं करोतिस्म. अथैकदा तस्य सभामध्ये चंद्रोद्योताख्यो नटः समायातः, तेन तत्र सभायामतीवमनोहरं नाटकं कृतं, राजादयः सर्वेऽपि सभाजना सहर्षा जाताः. राज्ञापि तस्मै भूरिद्रव्यदानं दत्तं, ततो राज्ञा तं चंद्रोद्योतंप्रति कथितं, भो नट! त्वं नृत्यकलायामतीवकुशलोऽसि. अथ चंद्रपुराभिधे नगरे चंद्रसेनाख्यो राजा राज्यं करोति, परं स परमो जैनश्रमणोपासकोऽस्ति. तस्य नृपस्य चित्तं नाटकेन रंजयित्वा यदि त्वं तस्य पार्श्वाद्दानं लभेथास्तदा तव कलां समीचीनामहं मन्ये. तदा तेन चंद्रोद्योतेन तत्र सभामध्ये साहंकारं वचनं कथयित्वा तथाकर्तुं प्रतिज्ञा कृता. ततोऽसौ

शीघ्रं तां चंद्रपुरींप्रति चचाल. क्रमेण पंथानमुल्लंघ्य स तत्र चंद्रपुर्यां प्राप्तः. अथैकदा प्रस्तावं लब्ध्वा स राजसभायां गत्वा मनोहरं नाटकं चकार, परं स चंद्रसेनराजा तस्य नृत्येन मनागपि नारंज्यत; सर्वे सभालोकाश्च रंजिताः संतस्तस्य नटस्य दानं दातुं वांछंति, परं राजा न वांछति. तदा तेन नटेन नानाविधवेषेण नवनवरागाद्यालापेन सर्वजनानंदकारकं नाटकं कृतं, परं राजा तन्नृत्यं मनागपि स्वमनसि नाभावयत्. तदा स नटो निजमनस्यतीव खेदं प्राप्तः, विचारयामास चाधुनाहं किं करोमि? ततोऽसौ मुनिवेषं गृहीत्वा सभायामागत्येमां गाथां पपाठ—संझरागजलबुब्बुओवमे । जीविए य जलबिंदुचंचले ॥ जुव्वणे नइवेगसंनिहे । पावजीव किमु हा न बुज्झसि ॥ १ ॥ एवंविधां वैराग्यांचितां तां गाथां श्रुत्वा राज्ञा तस्य सन्मुखं विलोकितं, तुष्टीभूय च तं नटंप्रति प्रोक्तं, भो चंद्रोद्योत! अनया तव वैराग्योपेतगाथयाहं तुष्टोऽस्मि, मम चतुःषष्टिघोटकशालाः संति, तन्मध्ये प्रत्येकघोटकशालायां चतुःषष्टिमिता घोटकाः संति, ते सर्वेऽपि घोटका मया तुभ्यं दत्ताः, अतस्त्वं तान् गृहाण? तदा नटो जल्पति "आरंभे नत्थि दया" तदा पुनर्नृपेण भणितं, भो चंद्रोद्योत! मदीयांतःपुरमध्ये प्रत्येकं सपादकोटिमूल्याभरणभूषिता बह्व्यो योषितः

संति, ता मया तुभ्यं दत्ताः. तदा तेन नटेन भणितं "महिलासंगेणं नासए बंभं" तदा पुनर्नृपेण जल्पितं, भो नट! त्वया तु केवलं कायेनैवैष वेषो गृहीतोऽस्ति, न पुनर्वचनमनोभ्यां, तदा पुनः स नृत्यकरोऽवदत् "संकाए सम्मत्तं" अथ पुनर्भूपेन प्रोक्तं, रे नृत्यकर! मया राज्यभांडागारसर्वस्वमपि तुभ्यं दत्तं, अतस्त्वं गृहाण? तदा नटेनोक्तं भो नरपते! "पव्वज्जा अत्थगहणेणं" द्रव्यग्रहणे हि चारित्रं न स्यात्. अथैनंविधानि तस्य नटस्य वचनानि श्रुत्वा राजा निजमनसि चमत्कृतः संतोषं च प्राप्य तस्य गुणोत्कीर्तनं व्यधात्. ततः स नटस्तु तस्मिन्नेव क्षणे संसारस्यानित्यत्वं भावयन् गुणश्रेणिमारूढो घातिकर्मचतुष्टयं क्षपयित्वा केवलज्ञानमासाद्य सुरैर्विनिर्मिते स्वर्णपंकजे समुपविश्य धर्मदेशनां चकार. यथा–आरंभे नत्थि दया। महिलासंगेण नासए बंभं ॥ संकाए सम्मत्तं। पव्वज्जा अत्थगहणेणं ॥ १ ॥ एवंविधकेवलिनटमुनेरुपदेशेन प्रतिबोधं प्राप्तः स चंद्रसेनो राजा कृतांजलिर्व्यज्ञपयत् हे भगवन्! मुहूर्तं यावद्यूयमत्रैव स्थितिं कुरुध्वं? यथाहं निजपुत्रे राज्यभारं समर्प्य युष्मत्पार्श्वे चारित्रं गृह्णामि. केवलिनोक्तं भो राजन्! धर्मकार्ये विलंबो न कार्यः. ततः स चंद्रसेनो राजापि द्रुतं निजपुत्रे राज्यभारं समारोप्य तस्य चंद्रोद्योतकेवलिनः समीपे

चारित्रं जग्राह. प्रांते च स राजर्षिरपि कर्मक्षयं विधाय मोक्षं प्राप्तः. ॥ इति चंद्रोद्योतनर्तककथा समाप्ता ॥

अतिलोभो न कर्तव्यो । नूनं लोभं परित्यजेत् ॥ अतिलोभात् श्रृंगदत्तो । वधूभिश्चिक्षिपेऽर्णवे ॥ १ ॥

रोहणाख्ये पुरे श्रृंगदत्ताभिधः श्रेष्ठी निवसतिस्म. तस्य गृहे द्वात्रिंशत्कोट्यः सुवर्णस्यासन्, परं सोऽतीवलोभाभिभूतोऽभूत्. तस्य चत्वारः सुताः सवधूका बभूवुः, परं तस्य श्रेष्ठिनो भयेन तत्सकलमपि कुटुंबं दानभोगादिरहितं जातं. स श्रेष्ठी धनव्ययभीतः स्वसुतान् गृहेऽपि स्थातुं न दत्ते. वधूनामपि गृहाद्बहिर्यातुं स न दत्ते, अर्थिनामपि च गृहप्रवेशं न यच्छति, एवंविधः स कृपणोऽपि सदा दानपंचकं दत्ते, यथा—कदर्यकस्यापि हि यस्य मंदिरे । सदैवमासीद्दत दानपंचकं ॥ द्वारे कपाटद्वितयं तथार्गला । कपोलहस्तश्च कुवाक्प्रकाशनं ॥ १ ॥ नृपचोरनिधीशाना—मुपकाराय वेधसा ॥ कदर्यः ससृजे सत्य—महो मोहपराभवः ॥२॥ विना कदर्यं दातापि । नाभविष्यत्प्रसिद्धिभाक् ॥ निशां विना कथंकारं । वासरोऽयमितीष्यते ॥३॥ म्लेच्छगेहमिवास्पृश्यं । त्याज्यं चांडालवेश्मवत् ॥ रथ्यानीरवदश्लाघ्यं । तस्यासीन्मंदिरं परं ॥ ४ ॥ इतश्चैका

सिद्धविद्या योगिनी व्योमगामिन्या विद्यया तस्य श्रेष्ठिनो गृहे प्रविष्टा. तदा ताभिश्चतसृभिरपि वधूभिः सविनयं तस्या बहुविधभक्तिं विधाय प्रोक्तं, भो भगवति! भवत्यात्र प्रवेशः कथं लब्धः? किं नः श्वशुरो द्वारि नास्ति? तन्निशम्य तया प्रोक्तमहं विद्यया गगनमार्गेणात्रागमं; ततस्ताभिर्वधूभिः सा योगिनी भक्त्या तथा प्रीणिता, यथा संतुष्टा सा साधारां ताभ्यो व्योमगामिनीं विद्यामदात. ततःप्रभृति ताः सर्वा अपि वध्वो रात्रौ सशृंगारा एककाष्ठाधारेण प्रतिदिनं स्वर्णद्वीपे यांति, तत्र चंद्रादिदेवान् रंभाद्यप्सरसां नृत्यादि विलोक्य हृष्टाः सत्यो निशाशेषे च स्वस्थाने समायांति. एवं कुर्वतीनां तासां बहूनि दिनानि निर्गतानि. अथ तस्य शृंगदत्तश्रेष्ठिनश्चैको मुख्यसेवको नित्यं काष्ठस्थानविपर्यासदर्शनाज्जातशंक एकदा रात्रौ गतनिद्रः स्थितः. तदा तेन तत्काष्ठस्थानविपर्यासकारणं ज्ञातं. अथ द्वितीयदिने स सेवकः पूर्वत एव तस्य काष्ठस्य कोटरे प्रविश्य स्थितः, ताभिः सार्धं च प्रच्छन्नं निशि स्वर्णद्वीपे प्राप्तः; तत्र तेन सर्वमपि दृष्टं, मनस्यत्यंतं स विस्मितश्च. अथ वलमानेन तेन ततः स्वर्णेष्टिकाद्वयं निजसार्थे संगृहीतं. अथ तथैव निजस्थाने समागतः स दासो निश्चिंतः सुखेन सुष्वाप. ततस्तेन शृंगदत्तेन कार्याय प्रेरितो द्रव्यो-

न्मादास्स उत्तरमपि न ददौ. तदा तेन श्रेष्ठिना चिंतितं; किमनेन कुतोऽपि धनं प्राप्तं? अथवा किं केना-
प्ययं रोपितोऽस्ति? यदयमयमुत्तरमपि न यच्छति. ततः श्रेष्ठिना चाटूक्तिभिर्मधुरालापैः पृष्टोऽसौ सर्वं तद्वृ-
त्तमाख्यातवान्, स्वयमानीतस्वर्णेष्टिकाद्वयं च तस्मै अदर्शयत्. अथ लोभाक्रांतः स श्रेष्ठ्यपि शीघ्रं
सूर्यास्तकालं वांछन् निशामुखे च कीरवत्तत्र काष्टकोटरे प्रविश्य मौनपरश्च स्थितः. ततो गतश्च स वधूभिः
सह स्वर्णद्वीपे. अथ लोभाभिभूतेन तेन स्वर्णेष्टिकाभिस्तत्काष्टं भृशं भृतं. अथ कृतकृत्यास्ता वध्वस्तत्काष्टं
समुत्पाट्य तद्वशा गगनाध्वना चलिताः. परं तद्दिने तत्काष्टातिभारेण खिन्नास्ताः परस्परं जल्पंति, अथा-
स्माकं नगरमासन्नमस्ति, अत इदमतीवभारकरं काष्टं तु समुद्रे एव मुच्यते, कल्ये च वयमपरं काष्टं
गृहीष्यामः. तासामित्यालापं श्रुत्वा तत्कोटरस्थेन तेन शृंगदत्तेन श्रेष्ठिना चिंतितं, नूनं संप्रति मुधैव मे
मरणं समागतं, अतोऽहं कथयाम्येताः सांप्रतं यावत्ता इदं काष्टं समुद्रे न क्षिपंति. इति विमृश्य कोटर-
स्थेनैव तेन महता शब्देनोक्तं, भो वध्वः! भवतीभिरिदं काष्टं सागरमध्ये न क्षेप्यं, यतोऽहं युष्माकं श्वशु-
रोऽत्र कोटरमध्ये स्थितोऽस्मि. तत् श्रुत्वा विस्मितास्ता अतीवरुष्टास्तत्क्षणमेव तत्काष्टं सागरमध्ये चिक्षिपुः.

ततस्ताः प्रमुदिता गृहे समेत्य सदैव स्वस्वभर्तृयुता दानभोगादिपराः सुखेन निजसमयं गमयांचक्रुः.

॥ इति लोभविषये श्रृंगदत्तकथा समाप्ता ॥



अथ दानविषये विद्यापतिश्रेष्ठिकथा प्रारभ्यते—पोतनपुराख्ये नगरे सूराभिधो राजा बभूव. तत्र च विद्यापतिनामैको धनवान् व्यापारी वसतिस्म. सोऽहर्निशं सप्तक्षेत्र्यां पुण्यलाभेच्छया निजधनव्ययं करोति. अथैकदा लक्ष्मीदेवी स्वप्नमध्ये तस्मै जगौ, हे श्रेष्टिन्! अथेतो दशमे दिवसेऽहं यास्यामि. एवंविधं तस्या लक्ष्मीदेव्या वचनं निशम्य स विद्यापतिश्रेष्ठी चिंतया श्यामाननोऽभवत्. अथ प्रभाते शीलादिगुणगणालंकृतया श्रृंगारसुंदर्याख्यया तस्य भार्यया निजस्वामिनं चिंतातुरं वीक्ष्य पृष्टं, हे स्वामिन्नद्य युष्मच्चेतसि का चिंता विद्यते? तदा श्रेष्टिनापि तस्यै लक्ष्मीगमनादिकोदंतः कथितः. तत् श्रुत्वा तया चतुरया भार्ययोक्तं, हे स्वामिन्! यूयमथ सर्वस्यापि धनस्य धर्मभावनया सप्तक्षेत्र्यामेव व्ययं कुरुध्वं? श्रेष्ठिनापि निजभार्यावचनतः सकलमपि निजद्रव्यं सप्तक्षेत्रेषु व्ययितं. ततो गुरूणां समीपे च समागत्य ताभ्यां दंपतीभ्यां परि-

ग्रहपरिमाणव्रतं शुभभावेन स्वीकृतं, त्रिकालं च ताभ्यां जिनार्चा विहिता, द्विसंध्ययोश्चावश्यकं कृतं, सुपात्रदानपूर्वकं च ताभ्यां स्वामिवात्सल्यं विहितं. ततस्ताभ्यां पृथक् पृथक् एका शय्या, उभे वस्त्रे, भोजनार्थमेकं भाजनं, एकं कचोलकं च पानीयपानार्थं, दिनमध्ये एकशो भुक्तिः, रात्रौ चतुर्विधाहारत्यागः, पर्वणि चोपवासादिरिति नियमः स्वीकृतः. अथ सर्वलक्ष्मीव्ययकरणानंतरं श्रेष्ठिना चिंतितं विना श्रियमथात्र मया लोकानां मुखं कथं दर्शनीयमिति विचिंत्य स देशांतरगमनायोत्सुको जातः. अथ यदा स प्रभाते सुप्तोत्थितस्तदा पूर्वमिव पुनरपि लक्ष्मीयुतं निजगृहं वीक्ष्य मनसि चमत्कृतो निजभार्यांप्रत्याह, भो सुशीले! एतद्दीयमानमपि धनं सांप्रतं कथमक्षयमेव लक्ष्यते? तदा चतुरया तया प्रोक्तं, स्वामिन् दशमे दिवसे सा लक्ष्मीर्यास्यति. अथैवं सकलधनव्ययं कुर्वतस्तस्य श्रेष्ठिनो नव दिनानि गतानि. अथाद्य तु निश्चितं लक्ष्मीर्यास्यति, इति ध्यायन् स निश्चितः सुप्तः. अथ दशमेऽह्नि रात्रौ स श्रियोचे हे श्रेष्ठिन्नहं तव गृहे स्थितास्मि, त्वया पुण्यदानभिर्बद्धाहं गंतुं न शक्नोमि, यतः पुण्यानुभावात्तत्रांतरायो विलीनः. अथ प्रातः स व्यवहारी तां स्थितामपि श्रियं दाने दत्वा गृहसारभूतां जिनार्चाकरंडिकां च निजशिरसि

धृत्वा सभार्यो विदेशंप्रति चचाल. अथ नगरप्रतोलीं यावत्स समायातस्तावत्तन्नगराधिपतिः सूरराजा निःपुत्रो विपन्नः. तदा मंत्रिभी राज्यार्हपुरुषगवेषणार्थं पंचदिव्यानि शृंगारितानि. अथ तन्मध्याद्गजेंद्रः स्वशुंडास्थितेन जलसंपूर्णकलशेन विदेशंप्रति व्रजतस्तस्य विद्यापतिश्रेष्ठिनः शिरसि स्नपयामास. एवं छत्रचामरादीनि दिव्यान्यपि तमेव श्रेष्ठिनं सेवंतेस्म. विद्यापतौ श्रेष्ठिनि च राज्यग्रहणार्थं निषेधं कुर्वति गगनगीरभवत्, यथा–भो श्रेष्ठिन्! तव महद्भाग्यं विद्यते. जिनबिंबस्नात्रकरणप्रभावात्तव राज्याभिषेको जातः. ततोऽसावेवं राज्यमासाद्य श्रीजिनेश्वरबिंबं च सिंहासने निवेश्य स्वयं च तत्पादपीठे समुपविश्य राज्यकार्यं करोति. तस्य राज्याभिषेकसमये सम्यग्दृष्टिदेवै रत्नवृष्टिः कृता. तै रत्नैश्च तेन विद्यापतिनृपेण रत्नसुवर्णनिर्मितजिनबिंबयुतानि पंचशतजिनचैत्यानि कारितानि. निजराज्यजनादयश्च करमुक्ताः कृताः. धर्माराधनपरश्च स कुटुंबयुतः सुखेन राज्यं पालयतिस्म. ॥ इति दानधर्मे विद्यापतिश्रेष्ठिकथा समाप्ता ॥

प्राणिनामसहायाना–मपि पुण्यवतामिह ॥ अघटस्येव जायंते । विपदोऽपि हि संपदः ॥ १ ॥

तथाहि—अवंतीदेशे श्रीविशालाभिधानायां नगर्यां सुघटिताभिधो राजाभूत्. तस्य रत्नमंजर्याह्वया राज्ञी बभूव. तयोश्च विक्रमसिंहाख्यः पुत्रोऽजनि. ज्ञानगर्भाख्यश्च राज्ञः पुरोहितोऽभवत्. अथ कदाचिदास्थानसभायामुपविष्टे राज्ञि कोऽपि भृत्यः समागत्य तस्य ज्ञानगर्भस्य पुरोहितस्य श्रवणे प्रच्छन्नं किमपि कथयामास. तत् श्रुत्वा स पुरोहितोऽतीवविस्मयपूर्वकं निजमस्तकं धूनयामास. तदा राज्ञा तद्विस्मयकारणं पुरोहिताय पृष्टं; तदा पुरोहितः प्राह महाराज एतत्कथयितुं न योग्यं, यतस्तत्श्रवणेन भवतां मनस्यसमाधिर्भविष्यति. परं राज्ञा साग्रहं पृष्टः स प्राह, स्वामिन्! मम गृहे दास्यैकया पुत्रो जनितोऽस्ति, स च त्वयि जीवति तव नगर्यां राज्यं करिष्यति. एतच्च श्रुत्वा कोपानलेन ज्वलन् राजा तत्र स्थातुमशक्तो निजास्थानं विसृष्टवान्. अथ स पुरोहितोऽपि स्वगृहे गत्वा चक्रचापादिनिःशेषराजलक्षणविराजमानं तं बालमद्राक्षीत्. ततोऽसौ व्यचिंतयदहो! विषमाः कर्मणां गतयः! यदेतस्यापि पुरुषरत्नस्य दुष्कुलावतार इति. अथ स राजापि वर्धमानोऽयं बालो न मम श्रेयसे इति चिंतयन् तन्मारणार्थं स्वसेवकद्वयस्यादेशं दत्तवान्. तौ च तं बालं गृहीत्वा तस्य पुण्यानुभावेन समुत्पन्ननिजमानसकृपारसौ कथमपि तं हन्तुमनु-

स्साहवंतो जीर्णोद्याने कूपसमीपे मुक्तवंतो. अथ प्रभाते पुष्पग्रहणार्थं तत्रैको मालिकः समायातः. तत्र सर्वतः सकलमपि वनं पुष्पितं फलितं च दृष्ट्वा विस्मितस्तं वालं स व्यलोकयत्, विचारयामास च अहोऽस्यैव वालस्यायं महान् प्रभावो दृश्यते! इति विचिंत्य स तं वालं गृहीत्वा निजभार्यायै समर्पयामास. ततस्तेन मालिकेन "अस्य वालस्य चरित्रमघटं" इति विचिंत्य तस्य "अघट" इति नाम प्रदत्तं. अथैकदा सा मालिका तं वालं स्वसार्धं गृहीत्वा राजसभायां गतः, सुगंधवासितदिगंतरालां च पुष्पमालां सा राज्ञे समर्पयामास. तां चातीवरम्यसुगंधोपेतां मालां विलोक्य समस्तापि राजसभा निर्निमेषेव समजनि; परं पुरोहितस्य दृष्टिस्तु तत्रैव वालके निविष्टा. अथ संतुष्टो राजापि तां मालिकपत्नीं द्रव्यादिना सन्मान्य विसर्जयामास. ततो राज्ञा पुरोहिताय पृष्टं, भो पुरोहित! किमेवं भवता निरपत्येनेव स वालो व्यलोकि? तन्निशम्य तेन पुरोहितेनोक्तं, हे स्वामिन्! भाविभूपालः स एवायं वालो लक्षणैर्विलोक्यते. तत् श्रुत्वा राज्ञा चिंतितं, अरे! किमद्यापि स एव वालो जीवति? अथ तत्संबंधिनिश्चयार्थं राज्ञा तो निजसेवकावाकार्य पृष्टं, तदा भीताभ्यां ताभ्यामपि यथास्थितं निगदितं. तत् श्रुत्वा स भूपतिः क्रोधाक्रांतः पुनरपि

कृतांतमिव निःकरुणं कंचित्स्वसेवकं तन्मारणाय समादिदेश. तदा स सेवकोऽपि तस्या मालिन्या गृहे गत्वा वलात्कारेण च तं वालं गृहीत्वा तन्मारणाय निर्जनवने गतः. एतस्मिन्नवसरे "तात तातेति" ब्रुवता तेन वालेन निजजनकस्येव तस्य कूर्चमाकृष्टं. तदा तस्य पुण्यानुभावात्तेनापि निजमनसि कृपां लात्वा चिंतितं, अहं त्वनेन वालेन "तात तातेति" मधुरं भाषमाणेनाहं कृत एव निजपिता, तत्कथमेनं मारयामि? धिगस्तु राजसेवां! एवं चिंतयता तेन स वालो देवकुले यक्षप्रतिमया उत्संगे मुक्तः. तत्रापि स वालस्तु तस्य यक्षस्य प्रतिमायाः कूर्चाकर्षणतुंदारोहादिवाललीलायितानि कृतवान्. एवंविधाभिस्तदीयचेष्टाभिः प्रमुदितः स यक्षोऽपि निजमनसि चिंतयति, अहो! अयं वालस्तु मम पुत्रस्थानेऽभूत, तदयं मया पुत्रवत्पालनीयः. इतस्तत्रैव वनमध्ये आवासितमेकं देवधराख्यं वणिजं निःपुत्रं विज्ञाय तत्र रात्रौ गत्वा स यक्षस्तं वणिजंप्रत्याह, तुष्टोऽहं भवंतंप्रति, तेन मत्पुत्रस्थानीयो मच्चैत्यस्थ एको वालस्त्वया ग्राह्यः पालनीयश्च. एवंविधेन यक्षवचनेन परमं प्रमोदं प्राप्तः स वणिगपि प्रातरुत्थाय तत्र यक्षचैत्ये गत्वा तं वालं जग्राह. ततस्तेन स वालो निजप्रियायै समर्पितः. क्रमेण कलाचार्यसमीपे स वालः सकला अपि

कलाः पपाठ. अथैकदा स देवधरवणिगपि व्यापारार्थं सपुत्रस्तस्यामेव श्रीविशालाख्यायां नगर्यां समायातः, तत्र च स निजजवनिर्जितवायुवेगयोर्द्वयोस्तुरगयोरुपढौकनपूर्वकं राजानं ननाम. राजापि संतुष्टस्तं यथायोग्यं द्रव्यमर्पितवान्. तस्मिन्नवसरे स पुरोहितस्तु तमेवाघटकुमारं विलोकयामास. अथ तस्य वणिजो गमनानंतरं भूपाय पुरोहितेनोक्तं स्वामिन्! तेन देवधरेण वणिजा सार्धं यः पुरुषोऽत्र समागतोऽभूत्, स एव भवदीयस्थानेऽत्र राजा भविष्यति. पुरोहितस्य तद्वचनं श्रुत्वातीवखिन्नचित्तो राजा चिंतयामास, अहो! अयमघटकुमारो विश्वासेनैव हंतुं शक्यते, नान्यथा. अथ प्रभातसमयानंतरं स राजा तं देवधरं वणिजं समाहूय कथयामास, भो देवधर! त्वया सार्धं मम समीपे समागतः पुरुषः कोऽस्ति? तेनोक्तं स मदीयः सुतोऽस्ति. तदा राज्ञोक्तं किमस्ति तस्य किंचिदपि कलाकौशलं? तेनोक्तं स्वामिन्! धनुर्विद्यासमस्तकलाः कुशलोऽयमस्ति. राज्ञोक्तं यद्येवं तर्हि सोऽत्रैव तिष्ठतु? अहं तस्मै देशमेकं दास्यामि, इत्युक्त्वा राज्ञा तस्मै अघटकुमाराय मथुरानगरीराज्यं दत्तं. ततो मथुरायां प्रेषितः स समहोत्सवं तत्र प्रविष्टः. अथ तत्र गमनानंतरं तेनाघटराज्ञा चिंतितमहो मदीयस्वदेशीयसुभटैर्विना मुधैव मम राज्यलक्ष्मीरियं; इति विचिंत्य तेन

सहस्रमितनिजदेशीयसुभटानाहूय तैः स्वराज्यरक्षणं विहितं. तमुदंतं निशम्य स सुघटितनृपो निजमनस्यतीवखिन्नो गुप्तलेखेन तमघटकुमारमाकार्य कथयामास, भो अघट! अद्य मदीयः पुत्रो विक्रमसिंहः कटकमध्ये महासंकटे पतितोऽस्ति, अतस्तस्य सहायार्थं त्वया तत्र गंतव्यं, इत्युक्त्वा स दुराशयो राजा "अस्याघटकुमारस्य तालपुटं विषं देयं" इति लेखं तस्य हस्ते समर्प्य तं तत्र कटकमध्ये प्रेपितवान्. अथ सोऽघटोऽपि स्वसरलस्वभावेन तं लेखं लात्वा गच्छन्नंतराले क्वापि वने सुप्तस्तेन यक्षेण दृष्टः, तदा स यक्षश्चिंतितवान्, अहो मम पुत्रस्य केनेयं पथिकावस्था कृता? ततो निजज्ञानेन तस्य सुघटितनृपस्य दुष्टचेष्टितं विज्ञाय लेखमध्यस्थपूर्वोक्तान्यक्षराणि परावर्त्य "अस्मै त्वया सहोदरी दातव्या" इत्यक्षराणि स तत्र लेखमध्ये लिखितवान्. अथ सोऽघटोऽपि प्रातरुत्थाय कटकमध्ये गत्वा तस्य विक्रमसिंहाख्यस्य राजकुमारस्य नृपदत्तं लेखं समर्पयामास. लेखं वाचयित्वा राजकुमारेणापि तूर्णं स्वसहोदरी तस्याघटस्य परिणायिता. ततः कुमारप्रेपितः एकः सेवकः श्रीविशालायां नगर्यां गत्वा नृपाय कथयामास, हे स्वामिन्! त्वं वर्धाप्यसे, त्वदीयादेशेन विक्रमसिंहकुमारेण निजसहोदरी अघटाय परिणायितास्ति. एवं वृत्तांतं श्रुत्वा स राजा

सविस्मयं परमविषादं प्राप्तः. तदा सचिवादिभिः सभाजनै राज्ञे विज्ञप्तं, हे स्वामिन्! सोऽघटकुमारोऽत्र भवत्समीपे समाकार्यतां, यथासौ युष्मत्पादान्नमस्यति. तदा राज्ञापि तदुपरोधेन स निजसमीपे समाकारितः. सोऽघटकुमारोऽपि ससैन्यो नृपसमीपे समागतः, राज्ञापि समहोत्सवं नगरमध्ये प्रवेशितः. अथैवं कियत्सु दिनेषु गतेषु प्रकारांतरेण तं हंतुकामो राजा प्राह, भो अघटवत्स! अद्य वनस्थामस्मद्गोत्रदेवतां पूजयितुं रात्रौ त्वया पूजोपकरणयुतेन गंतव्यं. अथाघटोऽपि नृपादेशमंगीकृत्य पूजोपकरणस्थालं निजहस्ते गृहीत्वा रात्रौ गोत्रदेवतापूजनार्थं वनमध्ये गंतुं प्रवृत्तः. इतो निजप्रासादगवाक्षस्थेन नृपपुत्रेण स गच्छन् दृष्टः, तदा स नृपपुत्रस्तमघटकुमारं स्वसमीपे समाहूय कथयामास, भो कुमार! नवोढस्य भवत एवंविधरात्रिसमये वनमध्ये गंतुं न युक्तं, इत्युक्त्वा स स्वयमेव तत्पूजोपकरणस्थालं गृहीत्वा गोत्रदेवीपूजार्थं वनमध्ये गतः. तत्र च यावत्स देवीभवनसोपानमारूढस्तावदघटभ्रांत्या प्रच्छन्नस्थेन नृपप्रेरितधनुर्धरसुभटेन बाणैर्विद्धो भूमौ पपात. एवं निजपुत्रमरणं श्रुत्वातीव विषण्णो राजा स्वमनसि चिंतयामास, अहो! कर्मणामेवेह प्राधान्यं! न पुनर्मनश्चिंतितं कार्यं सिद्ध्यति. अथैवं मया तु वचसामप्यगोचरं पापं कृतं, इत्या-

निवेद्य पापं सकलमपि स्वकृतं साधूनामग्रे सर्वेषामपि प्रातः ततः निंदितवान्. निजात्मानं स द्विखेदपरः
दि- सुघटि- । घटयति तानि घटयति तानि विधिरेव अघटितघटितानि पठितं पुरोहितेन तेन तदा गृहीतवान्. तपस्यां राजा
अथाघटनरेंद्रेणापि ॥ १ ॥ चिंतयति नैव पुमान् यानि । घटयति तानि विधिरेव ॥ जर्जरीकुरुते तान्यघटितानि
द्रव्या- सर्वेऽपि मारितस्ते न स कृपापरैरन्यैरपि येश्च मालिकः, स पालयता न्यायेन निजराज्यं निष्कंटकं
तपोनिर्धूतघातिकर्ममलः सुघटितराजर्षिरपि स पालयन् व्रतं निरतीचारं अथ सन्मानिताः. भृशं दिदानैर्भृशं
निशम्यातीवप्रसन्नमनाः तदागमनं समाजगाम. उद्याने नगर्या श्रीविशालाया तत्रैव केवलज्ञानमासाद्य
केवलिनापि तदा समागतः. वंदितुमुद्यानमध्ये केवलिनं परिवृतस्तं पौरलोकैश्च स्वपरिवार सोऽघटनरेंद्रः
तत्रापि धर्म ॥ नरस्य पशोरिवायुर्विफलं । त्रिवर्गसंसाधनमंतरेण यथा- दत्ता. सुधामधुरवचोभिर्द धर्मदेशना
केवलिनमपृ- सोऽघटनरेंद्रः कृतांजलिः देशनांते अथ ॥ १ ॥ यन्नवतोऽर्थकामो विना तं न । वदंति प्रवरं
समुत्पन्नाः? संपद्भ्यः मे विपदो अपि समागता येन कृतं? पुण्यं किं मया पूर्वभवे भगवन्! हे च्छत्,
तस्य बभूव, राजा पुरंदराभिधो नगरे कुंडिनपुराख्ये विदर्भदेशे नरेंद्र! भो प्रोक्तं, केवलिना तन्निशम्य

शचीनाम्नी राज्ञ्यभवत्. तयोश्च गजभंजनाख्यः पुत्र आसीत्. स राजकुमारः कदाचिन्नगरबाह्योद्याने क्रीडार्थं गतस्तत्रैकदेशे मलमलिनगात्रं कायोत्सर्गस्थं कंचिन्मुनिं दृष्ट्वा जुगुप्सां कृतवान्, अनुशासितश्च मित्रेण तं मुनिं प्रणतवान्. मुनिनापि तस्मै धर्मदेशना दत्ता. तत्रापि विशेषेण तस्याऽहिंसामयो धर्मोपदेशो मुनिना दत्तः. तत् श्रुत्वा प्रबुद्धेन तेनापि निरपराधजीववधविरमणे नियमो गृहीतः. ततः स कदाचित्तमेव महर्षिं मासक्षपणपारणे प्रतिलाभवान्. अथ कदाचिन्नवरात्रिमहे राजाग्रुपरोधेन महिषवधार्थं खड्गमुत्पाद्य पुनस्तमहत्वैव करुणया स्वकरे एव खड्गं धृतवान्. एवं चतुर्वारं विधायैकशोऽपि तेन महिषो न हतः. एवं कृपापरं धर्मं प्रतिपाल्य मृत्वा च मुनिनिंदया स त्वं दासीगर्भे समुत्पन्नः. यच्च महिषोपरि त्वया चतुर्वारं खड्ग उत्पाटितो न पुनर्मारितो महिषस्तेन भवतोऽपि चतस्रो विपदः समायाताः परं ताः सर्वा अपि संपद्रूपाः संजाताः. स महिषजीवोऽपि मृत्वायं सुघटिताख्यो राजा संजातः, पूर्वभवे भयोत्पादनवैरेण च स तवोपरि द्विष्टो बभूव. एवं निजपूर्वभववृत्तांतं श्रुत्वा सोऽघटो नृपो जातजातिस्मृतिर्देशविरतिं गृहीत्वा क्रमेण च सर्वविरतिमपि प्रतिपाल्य मुक्तिकांतापतिर्बभूव. ॥ इति जीवरक्षणेऽघटनृपकथा समाप्ता ॥

अतो जीवदया कार्या । वैरं कार्यं न केनचित ॥ १ ॥
जीवहिंसाविधानेन । जनो दुःखी प्रजायते ॥

एकस्मिन् ग्रामे कोऽपि दरिद्रो म्लेच्छो वसतिस्म. स दुष्टबुद्धिर्निशायां सर्वदा कृषीवलक्षेत्रेषु गत्वा प्रच्छन्नं निजोदरपूर्तये धान्यं चोरयति. तद्भक्षणेन च स्वाजीविकां करोति. क्रमेण तस्य तद्वृत्तांतः कृषिकारैर्ज्ञातः, परं तस्य दुष्टस्वभावं वीक्ष्य ततो निजापद्भयात्कोऽपि तं न निवारयति, परं तथाकरणतः सर्वेऽपि कृषिकारास्तदुपरि द्विष्टा बभूवुः. अथैकदा केनचित्पराक्रमवता कृषिकारेण क्षेत्रमध्ये धान्यचौरीं कुर्वन् स दुष्टः प्रच्छन्नं खड्गेन हतः. एवं तं हतं प्राणरहितं च दृष्ट्वा सर्वे कृषिकारो हृष्टा बभूवुः. अथ स दुष्टोऽपि दुर्ध्यानेन मृत्वा व्यंतरो जातः, पूर्वभववैरेण स तद्ग्रामलोकानामनर्थं कर्तुं विचारयामास. ततोऽसौ तत्रैव निजतुंबिकामधिष्ठाय स्थितः. अथैकदा पूर्वभवे निजहत्याकारकः स एव कृषिकारस्तत्र मार्गे हलं गृहीत्वा निजक्षेत्रे गच्छन् दृष्टः. पूर्ववैरं स्मृत्वा तुंबिकास्थेन तेन व्यंतरेण तंप्रति प्रोक्तं, भो किमर्थं त्वया कृषिकरणादिना क्लिश्यसे? केवलं मद्भक्तिमेव कुरु? यथाहं ते क्लेशंविनैव सर्वसमीहितं करिष्ये. चमत्कृतेन तेनापि सा तुंबिका गृहीता, निजगृहे च समानीता. ततस्तेन कृषिकारेण स्वगृहस्थितं सर्वमपि धान्यादि विक्रीय

तद्द्रव्यक्रीतकर्पूरचंदनपुष्पादिभिः सर्वदा तस्यास्तुंबिकायाः पूजनं प्रारब्धं. एवं तत्पूजनैकतत्परस्य निरुद्यमवतस्तस्य कियता कालेन सर्वमपि धनं निष्ठितं. अथ मार्गशीर्षादौ सर्वेषां कृषिकाराणां गृहेषु शकटभृतं धान्यं क्षेत्रेभ्यः समागच्छद् दृष्ट्वा तेन कृषिकारेण तां तुंबिकां सविशेषं पूजयित्वा प्रोक्तं, भो तुंबिके! अथ निजवचनानुसारेण त्वमपि मदीयगृहं क्लेशंविनैव धान्यादिना पूरय? तदा व्यंतराधिष्ठितया तया तुंबिकया हसित्वा प्रोक्तं भो मुग्ध! पूर्वं मया जीवताऽनेके कृषिकाराः क्लेशिता आसन्. अथ मृतेन मया तु केवलं पूर्ववैरेण त्वमेवैको मदीयप्राणहर्ता क्लेशे पातितोऽसि, केवलं कृपयैव त्वामहं जीवंतं मुंचामि, अतः क्लेशं सहमानो निजजीवितेनैव संतोषं कुरु? इत्युक्त्वा सा व्यंतराधिष्ठिता तुंबिका चादृश्या बभूव. ॥ इति वैरोपरि दुष्टबुद्धिकथा समाप्ता. ॥



विवेकपूर्वकं ग्राह्यो । धर्मः स्वात्महितैषिणा ॥ शुद्धं धर्ममिह प्राप्तो । विप्रः सोमवसुर्यथा ॥ १ ॥

कोशांबीनगर्यामाजन्मदरिद्रः सोमवसुनामा विप्रो बभूव. दारिद्र्यदग्धोऽसौ धर्माराधनार्थमुत्सुको जातः.

ततोऽसौ निजहृदि चिंतयति, अथाहं सम्यक् परीक्ष्येव धर्मं कुर्वे. इति विचार्य स सत्यधर्मपरीक्षार्थं परिव्राजकादिधर्मगुरूणां धर्मपरीक्षार्थं चचाम. अथैकदा कापि मठे गत्वा तत्रस्थमेकं परिव्राजकं दृष्ट्वा विनयेन तमभिवंद्य स तद्धर्मरहस्यं पप्रच्छ. तेनोक्तं भो द्विज! मद्गुरुणो धर्मरहस्यत्रिपदी मह्यं प्रोक्तास्ति, यथा— "मिट्ठं भुंजेयव्वं," "सुहं च सोयव्वं," "लोअप्पिओ अप्पा कायव्वो" इति. परमेतस्यास्त्रिपद्या अर्थमकथयित्वैव गुरुः स्वर्गं जगाम. ततो मया स्वबुध्ध्यैव तस्यास्त्रिपद्या अर्थं विचार्य धर्माचरणं करोमि, तद्यथा— "अहं सर्वदा घृतादियुतं पुष्टिकारकं मिष्टान्नमेव भुंजे." "सुकोमलशय्यायां च सर्वदा सुखेन शये." "लोकानां मंत्रतंत्रौषधादि दर्शयित्वा च सर्वदा लोकप्रियो भवामि" इति. तत् श्रुत्वा स सोमवसुविप्रश्चिंतयामास, एष खलु धर्मविधिर्न श्रेयस्करः प्रतिभाति. यतो मंत्रतंत्रौषधादिभिर्जीवघातो भवति. सर्वदा मिष्टान्नभोजनैरिंद्रियाण्युन्मत्तभावं भजंते. सुकोमलशय्याशयनेनापि कामविकारः प्रादुर्भवति. इति विचार्य स तस्यास्त्रिपद्याः सत्यार्थप्राप्तयेऽन्यत्र जगाम. एवं भ्रमन्नसौ कस्मिंश्चिन्नगरोद्याने एकं सुगतभिक्षुकं ददर्श, तं च नमस्कृत्य स तस्यास्त्रिपद्या अर्थं पप्रच्छ. तदा तेन भिक्षुकेणोक्तं, भो महाभाग! "एकांतरभोजनेन

मिष्टान्नभोजनं ज्ञेयं," "स्वल्पनिद्रया च सुखशयनं ज्ञेयं," "निरीहत्वेन च लोकप्रियत्वमेव भवति." इत्येवं तस्यास्त्रिपद्या अर्थो मे मनसि प्रतिभासते. तत् श्रुत्वा स सोमवसुविप्रश्चिंतयति, नूनमयं धर्ममार्गानुसारी वर्तते. अथैवमग्रे गच्छतस्तस्य त्रिलोचनाचार्यनामा जैनगुरुर्मिलितः. तदा तमपि स नमस्कृत्य सम्यग्धर्मप्राप्तीच्छया तस्यास्त्रिपद्या अर्थं पप्रच्छ. तेन प्रोक्तं, भो वत्स! "अकृताऽकारिताऽननुमतभिक्षालब्धं निर्दोषं भोजनं मिष्टान्नं ज्ञेयं," "विधिना प्रमादरहितत्वेन स्वल्पनिद्रया सुखशयनं ज्ञेयं," "निरीहत्वपूर्वकं भाषासमित्या प्रियभाषणेन च लोकप्रियत्वमेव भवतीति." यतः—विश्वस्यापि स वल्लभो गुणगणस्तं संश्रयत्यन्वहं । तेनेयं समलंकृता वसुमतो तस्मै नमः संततः ॥ तस्माद्धन्यतमः समस्ति न परस्तस्यानुगा कामधुक् । तस्मिन्नाश्रयतां यशांसि दधते संतोषभाक् यः सदा ॥ १ ॥ तत् श्रुत्वा सत्यतत्वज्ञानात्संतुष्टः स सोमवसुविप्रस्तां सत्यार्थां त्रिपदीमनुसृत्य धर्मक्रियां कुर्वतां तेषामेव जैनाचार्याणां समीपे निजात्मोद्धारार्थं प्रवव्राज. क्रमेण च स सुगतिं प्राप. एवं विवेकिना विचार्यैव विवेकेन धर्मो ग्राह्यः. ॥ इति धर्मतत्वपरीक्षाविषये सोमवसुविप्रदृष्टांतः ॥

पावइ उभयभवेसु । सो रणसूरव्व कल्लाणं ॥ १ ॥



अट्ठमीआइयचउसुवि । पव्वदिणेसु जो पोसहं कुणई ॥
कांचनपुर्यां रणशूराभिधो नृपो राज्यं करोति. तस्य श्रीकांताभिधाऽतीवमनोहररूपलावण्या राज्ञी
बभूव. तस्यामासक्तो राजा सर्वदा विषयसुखं भुंजानो धर्मनामापि न वेत्ति. अथैकदा सुभटरूपधरेण केन-
चिद्देवेन गगनतलादागत्य सभास्थस्य तस्य नृपस्य प्रोक्तं, यथा—किं न कुणसि जिणधम्मं । किं विसयं
सेवसे विगयसंको ॥ किं नियवलदप्पेणं । मच्चुभयाओ न वोहेसि ॥ १ ॥ भो नृप! त्वं जिनधर्मं कथं
न करोषि? विगतशंकः सन् कथं विषयान् सेवसे? निजवलदर्पेण च यमभटेभ्यः कथं न बिभेषि? इत्यु-
क्त्वा स देवस्तं नृपं समुत्पाट्यैकस्यामटव्यां मुमोच. अथ भयभ्रांतचित्तेन राज्ञा तत्र भ्रमतैको जैनमु-
निर्दृष्टः. तं दृष्ट्वा किंचिच्छांतचित्तोऽसौ तमभिवंद्य तस्याग्रे समुपविष्टः. मुनिनापि तस्मै धर्मोपदेशं दत्वा
प्रोक्तं, भो राजन्! यथा तेन देवेन ह्रियमाणस्य तव केनापि त्वत्सुभटेन रक्षा न व्यधायि, तथास्मिन्
संसारे विषयसेवनादिदुष्कर्मणा दुर्गतौ नीयमानस्य जीवस्य धर्मंविना किमपि शरणं नास्ति. तत् श्रुत्वा
चमत्कृतेन राज्ञा पृष्टं, भो मुनींद्र! अहमत्र केन देवेन हृतः? साधुः प्राह भो राजन्! पंचमकल्पवासी अमृ-

तत्प्रियाभिधः स सुरोऽस्ति, तेनाद्य मम समीपे समागत्य पृष्टं, यथा भो मुनीश! मयि च्युते मद्विमाने मदीयस्थाने कः सुरो भविष्यति? तदा मया प्रोक्तं, भो देव! रणशूराभिधो नृपस्त्वयात्रानीतो धर्मं प्राप्स्यति, स च निजायुःप्रांते तव विमाने त्वत्स्थाने देवो भविष्यति. तत् श्रुत्वा तेन देवेन स्ववांछितकाम्यया त्वमत्रानीतोऽसि. तन्निशम्य प्रबुद्धेन राज्ञा पर्वसु पोषधग्रहणाभिग्रहो गृहीतः. ततस्तेनैव सुरेण स निजनगरे मुक्तः. तदादितो धर्मकर्मरतः स रणशूरराजा पर्वसु पोषधव्रतं चकार. तद्भार्या श्रीकांतापि नृपोपदेशेन धर्मध्यानपरा बभूव. एवं पोषधव्रतयुतं जिनधर्मं प्रतिपाल्य प्रांते चाराधनापूर्वकं स कालं कृत्वा पंचमकल्पे देवोऽभूत्. ॥ इति पोषधव्रतोपरि रणशूरनृपकथा समाप्ता. ॥



अस्मिन्नसारसंसारे । ह्यतिमुक्तमुनीन्द्रवत् ॥ धृतवैराग्यसंभारो । जीवो मुक्तिमवाप्नुयात् ॥ १ ॥

पोलासपुरे विजयाभिधो नृपो बभूव, तस्य च श्रीदेवीनाम्नी राज्यभवत्. तयोरतिमुक्तकाभिधः सुतो जातः क्रमेण षड्वार्षिकोऽसौ कुमारो बहुदारकदारिकाभिः सह रममाणो निजप्रासादांगणे स्थितोऽभूत्.

इतस्तत्र श्रीगौतमो गणधरो गोचर्यां भ्रमन् समायातः. तं दृष्ट्वा सोऽतिमुक्तकुमारोऽवादीत्, के यूयं? किमर्थं चाटथ? तदा गौतमेनोक्तं श्रमणा वयं, भिक्षार्थं च पर्यटामः. अतिमुक्तकेन प्रोक्तं, तर्हि हे भगवन्! आगच्छत यूयं मदीयगृहे, अहं भवद्भ्यो भिक्षां दापयामि. इत्युक्त्वा स बालोऽतिमुक्तकुमारस्तं श्रीगौतमस्वामिनं निजांगुल्यां धृत्वा स्वगृहमध्ये समानयत्, गणधरेंद्रं दृष्ट्वा सा श्रीदेव्यप्यत्यंतं हृष्टा सती नमस्कृत्य शुद्धान्नैः प्रतिलाभयामास. तदा पुनस्तेनातिमुक्तकुमारेण गौतमस्वामिनंप्रति पृष्टं, हे भगवन्! यूयं क वसथ? गणधरेंद्र उवाच, भद्र! मम धर्माचार्याः श्रीवर्धमानस्वामिनो नगराद्बहिरुद्याने वसंति, तैः सार्धं वयमपि तत्रैव वसामः. तदा तेन बालेनोक्तं, तर्हि हे भदंत! किमागच्छाम्यहमपि तत्र भवद्भिः सार्धं श्रीमहावीरस्य पादानभिवंदितुं? गौतमोऽवादीत्, भो देवानुप्रिय! यथासुखं. ततः सोऽतिमुक्तकुमारो गौतमस्वामिना सह तत्रागत्य श्रीवर्धमानस्वामिनं वंदतेस्म. प्रभुणापि तस्मै वैराग्योपेतो धर्मोपदेशो दत्तः. तत श्रुत्वा प्रतिबुद्धोऽसौ गृहमागत्य निजपितरावब्रवीत्. यथा संसारान्निर्विण्णोऽहं प्रव्रज्यामादास्ये, अतो यूयं मामनुजानीत? तावूचतुर्भो वत्स! बालस्त्वं धर्मतत्त्वं किं जानासि? तदाऽतिमुक्तकेनोक्तं, भो अंब! भो

तात! "यदेवाहं जानामि, तदेव न जानामि." तथा "यदेवाहं न जानामि, तदेवाहं जानामीति." इति श्रुत्वा तौ तमवादिष्टां, भो वत्स! कथमेतत्? सोऽब्रवीत "जानाम्यहं यदुत जातेनावश्यं मर्तव्यं" परं "न जानामि कदा? वा कस्मिन् काले? कथं वा? कियच्चिराद्वा? इति." "पुनरेतन्न जानामि यन्नरकादिषु काः का वेदना जीवैरनुभूयंते, परमेतज्जानामि यत्स्वयं कृतैः कर्मभिः प्राणी तत्र समुत्पद्यते. एवं निजमातापितरौ प्रतिबोध्य तदाग्रहाच्चैकं दिनं राज्यश्रियं भुक्त्वा सोऽतिमुक्तकुमारः प्रवव्राज. क्रमेण स मुनिरेकादशांगानां पारं प्रयातः. कृतानेकविधतपा बहुवर्षाणि श्रामण्यं प्रतिपाल्य सोऽतिमुक्तो मुनींद्रः सिद्धिसुखं समासादयत्. ॥ इति वैराग्योपरि श्रीअतिमुक्तमुनींद्रकथा समाप्ता ॥

जीवो दुःखमवाप्नोति । ज्ञानद्रव्यस्य भक्षणात् ॥ साधारणस्य द्रव्यस्य । तथा भक्षणतोऽपि च ॥ १ ॥

यथा भोगपुराभिधे नगरे चतुर्विंशतिकनककोटिस्वामी धनावहाख्यः श्रेष्ठी बभूव. तस्य च धनवतीनाम्नी प्रियासीत्. तयोः कर्मसारपुण्यसाराभिधौ द्वौ सुतौ जातौ. अथैकदा पित्रा तयोर्भाग्यपरीक्षार्थमेको

नैमित्तिकः पृष्टः. तदा तयोर्हस्तरेखादि विलोक्य तेन नैमित्तिकेनोक्तं, अयं कर्मसारो जडप्रकृतिर्निःप्रज्ञो विपरीतबुद्धिश्च भविष्यति. बहूपक्रमेऽपि स भवद्दत्तं सर्वमपि धनं विनाशयिष्यति. नव्यद्रव्योपार्जनाऽभावाच्च स बहुकालं भृशं दारिद्र्यदुःखवान् भावी. अथायं पुण्यसारोऽपि तथैव भावी. तस्यापि भवदर्पितं धनं नाशं प्रयास्यति, नव्यार्जितद्रव्यस्यापि पुनः पुनर्हानिर्भविष्यति, वार्धक्ये च द्वयोरपि तयोर्धनप्राप्तिसंतत्यादि सौख्यं भविष्यति. अथ क्रमात्यक्तबाल्यभावौ तौ पित्रा पाठनार्थं विज्ञोपाध्यायस्य समर्पितौ. तत्र स पुण्यसारः सुखेन सकला अपि विद्या अधीतवान्. कर्मसारस्य च बहूपक्रमेणापि अक्षरमात्रमपि नायातं. किं बहूक्तेन? स वाचनलिखनाद्यपि कर्तुं न शक्नोति. सर्वथा पशुरिव स निःप्रज्ञो जातः. अथ क्रमेण तौ द्वावपि यौवनं प्राप्तौ. पितृभ्यां च समृद्धतया द्वाभ्यां महेभ्यकन्याभ्यां सह तौ परिणायितौ. ततो मिथः कलहभीताभ्यां पितृभ्यां तौ द्वावपि द्वादशद्वादशकोटिधनं विभज्य दत्वा पृथक् कृतौ. ततस्तौ पितरौ तु प्रव्रज्य स्वर्गं गतौ. अथ कर्मसारः स्वजनादिभिर्वार्यमाणोऽपि केवलं निजबुध्ध्यैव व्यापारं कुर्वन् सर्वमपि स्वधनं विनाशयामास. एवं स्वल्पैरेव दिनैः स्वजनकार्पितद्वादशकोटिमितं धनं तेन निर्गमितं. पुण्यसा-

रस्यापि जनकार्पितं सकलं धनं तस्करैर्मुषितं. ततस्तावुभावपि दरिद्रीभूतौ स्वजनैरपि त्यक्तौ. तयोर्द्वयोर्भार्ये अपि क्षुधादिपीडिते स्वपित्रोर्गृहयोर्गते. लोका अपि तयोर्निंदां चक्रुः, यतः—धनिकस्यालीकमपि । सत्यत्वेन प्रकाशमायाति ॥ तस्यैव दुश्चरणमपि । सच्चरणं गीयते लोके ॥ १ ॥ गुणवंपि निगुणं चिय । गणिज्जए परिजणेण गयविहवो ॥ दक्खत्ताइगुणेहिं । अलिएहिंवि गहिज्जए सधणो ॥ २ ॥ ततो निर्बुद्धी अभाग्यावेताविति लोकैरपमानितौ तौ देशांतरं गतौ. स्थितौ च तत्र पृथक्पृथक् कापि महेभ्यगृहयोरन्योपायाभावाद्भृत्यवृत्त्या. यस्य च गृहे स कर्मसारः स्थितः स व्यवहारी दुष्टः कृपणश्चाभवत्; तेन स तस्य प्रोक्तं वेतनमपि न दत्ते. अमुकदिनेऽहं ते दास्यामीति मुहुस्तं स वंचयतेस्म. एवं बहुभिरपि दिनैस्तेनाद्येन बंधुना किमपि नार्जितं. द्वितीयेन च बंधुना कियदर्जितं, परं प्रयत्नतो गोपितमपि तद्धनं केनचिद्धूर्तेनापहृतं. एवं तेनाद्येन बंधुना नानाविधस्थानेषु भृत्यवृत्त्या धातुवादेन सिद्धरसायनेन रोहणाद्रिगमनेन मंत्रसाधनेन रुदंत्याद्योषधीग्रहणेन चैकादशवारान् महोपक्रमकरणेऽपि कुबुध्यादिना वैपरीत्यविधानेन कापि धनं नार्जितं, किंतु तेन तानि दुःखान्येव केवलं सोढानि. अपरेण च पुनरर्जितमपि धनं प्रमादादिनैका-

दशवारान्निर्गमितं. ततोऽत्युद्विग्नौ तौ पोतमारुह्य रत्नद्वीपे गत्वा सप्रत्ययरत्नद्वीपदेव्यग्रे मृत्युमप्यंगीकृत्य
स्थितौ. अष्टमे चोपवासे नास्ति युवयोर्भाग्यमिति तौ देव्या प्रोक्तौ. तत् श्रुत्वा स कर्मसारस्तु तत उत्थितः.
पुण्यसारस्य त्वेकविंशत्योपवासैर्दत्तं तया देव्या चिंतामणिरत्नं. तदा पश्चात्तापं कुर्वन् स कर्मसारः पुण्य-
सारेणोक्तः, भो भ्रातस्त्वं मा विषीद? एतन्मदीयचिंतारत्नेन तवाप्यभीप्सितं सेत्स्यतीति. अथ तौ द्वावपि
हृष्टौ ततो निवृत्य पोते समारूढौ. अथैकदा रात्रौ च राकाशशांकोदये तयोर्वृद्धेनोक्तं, भो भ्रातः तच्चिंता-
रत्नं त्वं स्फुटीकुरु? यथा विलोक्यते, किं चंद्रस्य वा तस्य चिंतारत्नस्याधिकं तेज इति. तदा दुर्दैवप्रे-
रितेन पोततटस्थेन तेन लघुबंधुनापि तद्रत्नं निजहस्ते गृहीत्वा, क्षणं तत्र रत्ने, क्षणं च चंद्रे दृष्टिं निद-
धता पातितं तद्रत्नं रत्नाकरे निजमनोरथैः सह. ततस्तौ द्वावपि निजमनसोरत्यंतं दुःखितौ स्वपुरं प्राप्तौ.
अथैकदा कश्चिद् ज्ञानी मुनिस्तत्र समायातः, तं वंदित्वा ताभ्यां पृष्टं, हे भगवन्! प्राग्भवे आवाभ्यां किं
दुष्कर्म विहितं? येन कृतोद्यमावप्यावां दरिद्रावेव स्थितौ. तदा तेन ज्ञानिमुनिना प्रोक्तं—चंद्रपुराभिधे नगरे
जिनदासजिनदत्तनामानौ परमार्हतौ द्वौ श्रेष्टिनावभूतां. अथान्यदा तत्रत्यश्रावकैरेकलीभूतं प्रभूतं ज्ञानद्रव्यं

साधारणद्रव्यं च तयोः क्रमाद्रक्षार्थं समर्पितं. तावपि सम्यक्प्रकारेण तद्द्रव्यरक्षां कुरुतः. अथान्येद्युराद्येन जिनदासश्रेष्ठिना स्वनिमित्तं किंचिच्छास्त्रं लेखकपार्श्वे लिखापितं; स्वपार्श्वे चापरद्रव्याभावादेतदपि ज्ञानस्थानमेवेति विचिंत्य तद्ज्ञानद्रव्यात्तेन द्वादशद्रम्मास्तस्य लेखकस्यार्पिताः. ततो द्वितीयेन जिनदत्तश्रेष्ठिनाप्येकदा चिंतितं साधारणद्रव्यं खलु सप्तक्षेत्रीयोग्यत्वेन श्राद्धानामपि योग्यं, अथाहमपि च श्रावक इति विमृश्य निजपार्श्वेऽन्यद्रव्याभावात्स्वगृहगाढप्रयोजने तस्य साधारणद्रव्यस्य द्वादशद्रम्मा व्ययिताः. ततस्तो द्वावपि मृत्वा तेन दुःकर्मणा प्रथमं नरकं गतौ. यदुक्तं वेदांतिनापि—प्रभास्वे न मतिं कुर्यात् । प्राणैः कंठगतैरपि ॥ अग्निदग्धाः प्ररोहंति । प्रभादग्धा न रोहति ॥ १ ॥ प्रभास्वं ब्रह्महत्या च । दरिद्रस्य च यद्धनं ॥ गुरुपत्नी देवद्रव्यं । स्वर्गस्थमपि पातयेत् ॥ २ ॥ प्रभास्वं साधारणद्रव्यमित्यर्थः. नरकोद्धृतौ च तो सरीसृपो जातो (२), ततो द्वितीयपृथिव्यां नारको जातो (३), ततो गृद्धो (४), ततस्तृतीयपृथिव्यां नारको (५). एवमेकद्व्यादिभवांतरितो सप्तसु पृथ्वीपु एकद्वित्रिचतुःपंचेंद्रियतिर्यक्षु तो द्वादशसहस्रभवान् भ्रांतो. प्रायः सर्वभवेपु च सर्वांगच्छेदादिकदर्थनया भूयस्तरं दुःखमनुभूय बहुक्षीणतद्दुःकर्माणो युवामत्र

जातौ. द्वयोरपि द्वादशद्रम्मोपभोगाद्द्वादशसहस्रभवेषु तादृग्दुःखं जातं. अस्मिन् भवेऽपि द्वादशकोटिद्रव्यनाशः संजातः. द्वादशवारांश्च बहूपक्रमेऽपि धनहानिगृहदास्यदुःखादि जातं. इति श्रुत्वा ताभ्यां द्वाभ्यामपि श्राद्धधर्मं प्रतिपद्य प्रायश्चित्तार्थं धनप्राप्तौ प्रथमं द्वादशसहस्रद्रम्माणां ज्ञानसाधारणमार्गेऽर्पणार्थं नियमो गृहीतः. ततस्तयोर्द्वयोरपि प्राक्कर्मक्षयाद्व्यवसायतो विपुलं द्रव्यं प्राप्तं. क्रमाच्च तयोर्द्वयोरपि द्वादशद्वादशकोटिसौवर्णिकाः प्राप्ताः. ततस्तौ द्वावपि निजं सकलमपि द्रव्यं धर्मकार्येषु नियुज्य प्रव्रज्य च सिद्धिसुखं प्राप्तौ. ॥

इति ज्ञानसाधारणद्रव्यव्ययोपरि कर्मसारपुण्यसारकथा समाप्ता ॥



॥ अथाकामनिर्जरायां मिठकथा प्रारभ्यते ॥

वसंतपुरनामास्ति । वसंततुंसमं पुरं ॥ प्रद्युम्नानंदि सत्प्रेक्ष्यं । विशालं सुमनःप्रियं ॥ १ ॥ श्रेष्ठी तत्रे-
भ्यनामाभूत् । प्रेयसी तस्य धारिणी ॥ कांताननः पुनः पुत्रः । स्नुषा सौभाग्यसुंदरी ॥ २ ॥ स्नांती दृष्टान्यदा
नद्यां । यूना केनापि सा स्नुषा ॥ तदंगसंगमाकांक्षी । स तामूचे ससंभ्रमं ॥ ३ ॥ सुस्नातं पृच्छति ते ।

नद्येषां मत्तवारणकरोरु ॥ एते च नदीवृक्षा । अहं च पादेषु ते पतितः ॥ ४ ॥ तं दृष्ट्वा हृष्टांतः साप्यूचे-
सुभगा भवतु नदीयं । चिरं च जीवंतु ते नदीवृक्षाः ॥ सुस्नातपृच्छकानां । प्रयतिष्यामः प्रियं कर्तुं ॥५॥
तस्या गृहाद्यजानन् स । डिंभान् पप्रच्छ तत्रगान् ॥ केयं तेऽभ्यधुरिभ्यस्य । स्नुषा सौभाग्यसुंदरी ॥ ६ ॥
सोऽथ दध्यौ कथं मेऽस्याः । संगमः संभविष्यति ॥ ततः प्रव्राजिकामेकां । दानादिभिरुपाचरत् ॥ ७ ॥
सा तेन प्रेषिता गत्वा । तदुक्तं तत्र तां जगौ ॥ रुष्टेव चारुणीभूय । तर्जयित्वा तया खरं ॥ ८ ॥ प्रक्षालयंत्या
भांडानि । मषीलिप्तकरेण सा ॥ हत्वा चपेटया पृष्टे-ऽपद्वारेणापसारिता ॥ ९ ॥ युग्मं ॥ आख्यद् गत्वाथ
सा तस्य । नामापि सहते न ते ॥ ज्ञातं तेनातिदक्षा सा । विक्रीतासौ वराकिका ॥ १० ॥ मषीपंचांगुली-
विन्यासात् । पृष्टेऽपद्वारकर्षणात् ॥ आहूतः कृष्णपंचम्या-मपद्वारेऽहमेतया ॥ ११ ॥ प्राप्तः संकेतकाले स ।
सुप्तावुपवनेऽथ तौ ॥ भोजने मक्षिकेवागात् । कुतश्चित् श्वसुरस्तदा ॥ १२ ॥ ददर्शायं न मे पुत्रः । कश्च-
नोपपतिर्ध्रुवं ॥ आचकर्ष स्नुषापादा-न्नूपुरं स शनैस्ततः ॥ १३ ॥ ज्ञात्वोचे स तया शीघ्रं । नश्य कुर्याः
सहायतां ॥ साथ गत्वा पतिं प्रोचे । घर्मे न सुप्यतां वहिः ॥ १४ ॥ अशोकवनिकामध्ये । सुप्तावथ मुहु-

तंतः ॥ उत्थाप्योवाच सा कातं। किमिदं वः कुलोचितं ॥ १५॥ यत्पादात् श्वसुरोऽगृह्ण–न्नूपुरं निस्त्रपो जरन् ॥ स
ऊचे प्रथिलो ह्येप। सूनोराख्यन्नरी प्रगे ॥ १६ ॥ सोऽवदद्विकलोऽसि त्वं। सोऽवग्दृष्टः स्फुटं परः ॥ भोक्ष्ये
शुद्ध्येव सोचेऽथ। ऊचुः सर्वेऽपि कुर्विति ॥ १७ ॥ तत्र स प्रत्ययो यक्ष–स्तत्पदोरंतरे व्रजन् ॥ ध्रियते दोप-
वांस्तेन। निर्दोपो याति तत्क्षणात् ॥ १८ ॥ सा स्नाता स्वजनोपेता–ऽचालीयक्षालयांतरे ॥ उन्मत्तीभूय
तेनासौ। श्लिष्टा लोकेन मोचिता ॥१९॥ सा च तत्र गतोवाच। यक्ष साक्षात्तवाखिलं ॥ मुक्त्वा स्वपतिमेनं
च। न स्पृष्टाप्यधुना परं ॥ २० ॥ इत्युक्त्वा मंक्षु यक्षांह्यो–र्भूत्वा मध्येन सा ययौ ॥ तद्व्यथ्रितयन्नेव।
यक्षोऽस्यात् किं करोम्यहं ॥ २१ ॥ यक्षोऽपि वंचितो ह्येपा। ख्याता नूपुरपंडिता ॥ सर्वैः शुद्धेति च
प्रोक्ता। लोकैर्वृद्धस्तु हीलितः ॥ २२ ॥ तस्याऽधृत्याऽनशन्निद्रा। ज्ञातमेतच्च भूभुजा ॥ चक्रेऽथांतःपुरारक्षो।
राज्ञा निर्निद्र इत्यसौ ॥ २३ ॥ सोधापांतेऽस्ति हस्तींद्रो। राज्ञी तन्मिंठके रता ॥ निशायां हस्तिहस्तेना–
ऽवरोहत्यांधिरोहति ॥ २४ ॥ तदा जाग्रति तस्मिंश्च। मुहुर्देवी निरीक्षते ॥ ततः सोऽभ्यनयन्निद्रां। राज्ञी
प्राग्वदवातरत् ॥ २५ ॥ वृहद्वेला वभूवेति। हस्त्यारोहेण रोपतः ॥ हता श्रृंखलया राज्ञी। तस्योचे कांत मा

कुप ॥२६॥ अंग्यारक्षो नवः कोऽपि। न स निद्राति तन्मम ॥ वेला जातेयती तस्य। वृद्धः सर्वं निरीक्ष्य च ॥२७॥ दध्यौ राज्ञोऽपि दुःशीला। यद्येवं रक्षिता अपि ॥ तन्नः स्त्रीषु न दोषो य–त्तासां त्राता कुलंविना ॥२८॥ सोऽथ सुप्तो न जागर्त्ति। सर्वः कोऽप्युत्थितः प्रगे ॥ सप्ताहादुत्थितः सोऽथ। सर्वामाख्यत्प्रभोः कथां ॥२९॥ तं विसृज्य नृपेणांत–र्मृन्मयः कारितः करी॥ राज्ञ्यः सर्वा नृपेणोक्ता। विवस्त्रास्तमलंघयन् ॥ ३०॥ सा तु राज्ञी जगादेवं। हस्तिनोऽस्माद्बिभेम्यहं ॥ हताथोत्पलनालेन। राज्ञा सा मूर्छयापतत् ॥ ३१॥ राज्ञोचेऽथ न ते भीति–र्मत्तेभात्कृत्रिमाच्च भीः॥ नामूर्छः शृंखलाघाता–न्मूर्छिता तूत्पलाहता ॥३२॥ तत्पृष्टे शृंखलाघातः। प्रेक्षितः क्ष्माभृता ततः ॥ अरे पापाधमा सैषा। वध्या सारोहकद्विपा ॥ ३३ ॥ सोऽथानाय्य गजारोहो। राज्ञोचे पाप संप्रति ॥ सराज्ञीको गजारूढ–स्त्वं शैलाग्रादितः पत ॥३४॥ स तथाद्रिं समारुह्य। राजादेशाद्गजं दधौ॥ क्रमात् त्रींश्चरणान् व्योम्नि। विधाप्येकांह्रिणा स्थितं ॥ ३५॥ रक्षेभमिति राजोचे। लोकेर्दोपोऽस्य न प्रभो ॥ लोकवाक्यात्ततो राज्ञा। स ऊचे रक्ष हस्तिनं ॥ ३६ ॥

सोऽभ्यधात्करिणं त्रास्ये। चेन्नो यच्छसि जीवितं ॥ दत्तं तेनांकुशेनेभो। वालयित्वा स्थले कृतः

॥ ३७ ॥ अथोत्तार्य गिरे राज्ञा । कृतो तौ देशताडितौ ॥ गच्छंतौ च क्वचिद् ग्रामे । शून्ये देवकुले स्थितौ
॥ ३८ ॥ रात्रौ ग्रामेयकेस्तत्र । त्रासितः पारिपंथिकः ॥ तदेव देवकुलकं । शरण्यं शरणं श्रितः ॥ ३९ ॥
वेष्टयित्वा तदाऽरक्षा-स्तस्थुः श्वोऽसौ गृहीष्यते ॥ स्पर्शाच्चौरस्य सा तत्र । रक्ता चौरेऽभ्यधादिदं ॥ ४० ॥
भव त्वं मे पतिः सोऽपि । मेनेऽथारक्षकैः प्रगे ॥ आरोहोऽक्षेपि शूलायां । सा चौरेण समं गता ॥ ४१ ॥
मार्गे दृष्ट्वा नदीं चौर-स्तमूचे देवि तेऽस्ति यत् ॥ तदर्पयादौ येनेदं । सर्वमुत्तारयाम्यहं ॥ ४२ ॥ त्वामनु-
त्तारयिष्यामि । दुरुत्तारं सहाखिलं ॥ शरस्तंबे विवस्त्रास्था-त्सर्वस्वं तस्य सार्पयत् ॥ ४३ ॥ नदीमुत्तीर्य
चौरोऽथ । दधावे साथ तं जगौ ॥ किमेवं यासि सोऽवादी-न्न विश्वसामि ते शुभे ॥ ४४ ॥ यथा त्यक्त-
स्त्वयैको हि । तथा त्वं यदि मामपि ॥ इत्युक्त्वा तस्करः सोऽगा-द्विलक्षा राज्यपि स्थिता ॥ ४५ ॥ शूला-
प्रोतो हस्तिपकः । श्राद्धाज्जलमयाचत ॥ स ऊचे चेन्नमस्कारं । ध्यायसि त्वं ददामि तत् ॥ ४६ ॥ ध्या-
यामीति च तेनोक्ते । श्राद्धोऽगाज्जलहेतवे ॥ ध्यायन्नेव नमस्कारं । मिंठो मृत्वा सुरोऽभवत् ॥ ४७ ॥ श्राद्ध-
श्चारक्षकैर्बद्ध-श्चौरार्थं जलमानयन् ॥ देवोऽवधेः प्रेक्ष्य शिलां । विकुर्व्य तममोचयत् ॥ ४८ ॥ शरस्तंबे च

दृष्ट्वा तां । तदर्थं फेरुरूपभाक् ॥ अवाक् मुक्त्वामिषं वक्त्रा—त्तीरे मत्स्याय धावितः ॥ ४९ ॥ आमिषं जगृहे श्येनो । मीनोंतःसलिलं गतः ॥ शृंगालोऽथ विलक्षोऽस्या—ध्यायंस्तमथ साब्रवीत् ॥ ५० ॥ मांसखंडं परित्यज्य । मत्स्यं धावसि जंबूक ॥ भ्रष्टो मीनाच्च मांसाच्च । हा किं ध्यायसि दैन्यतः ॥ ५१ ॥ सोऽवक् पत्रपुटच्छन्ने । अयशःकारिके पितुः ॥ भ्रष्टा पत्युश्चोपपत्युः । किं मां वदसि बंधकि ॥ ५२ ॥ इत्युक्ते व्रीडिता सास्यात् । सोऽथाभूद्दिव्यरूपभाक् ॥ तस्याः स्ववृत्तमावेद्य । व्रतार्थित्वमजीजनत् ॥५३॥ तेन संतर्ज्य राजाथ । तमम्राक्ष च पुंश्चलीं ॥ अथ सत्कारपूर्वं सा । निःक्रम्य स्वर्गभागभूत् ॥ ५४ ॥

इत्यकामनिर्जरायां मिंठकथा समाप्ता ॥

॥ अथ प्रस्तावोक्तिविषये यशोभद्रमुनिकथा ॥

इहैव भरते साकेतपुरं नाम नगरं, तत्र च पुंडरीको नाम राजा, तस्य लघुभ्राता च कंडरीकः, कंडरीकस्य च यशोभद्रानाम्नी भार्यासीत्. अथान्यदा कामबाणैराहतस्य तस्य वृद्धभ्रातुः पुंडरीकस्य चित्ते लघु-

भो सुंदरि! त्वं मां
भ्रातुः कंडरीकस्य भार्यायामनुरागो बभूव. अथैकदैकांते स पुंडरीकस्तां यशोभद्रामूचे, भो सुंदरि! त्वं मां
पतिं भजस्व? तयोक्तं राजन्! किमेवमभिदधासि? यतः—अह्नाय वह्नौ वहवो विशंति । शस्त्रैः स्वदेहांश्च
विदारयंति ॥ तीव्राणि कृच्छ्राणि समाचरंति । मारारिवीरं विरला जयंति ॥१॥ किंच हे राजन्! त्वयि चैवं
जल्पति नूनममृते विषमुत्पन्नं, सूर्यादंधकारो जातः, चंद्रमसोंगारवृष्टिर्जाता, जलादग्निरुत्थितः, यत आर-
क्षकात्त्वत्त एवेदं मे भयं जातं. यदि त्वत्सदृशः सुनेत्रो नर उन्मार्गे याति, तदा दृष्टिविकलस्य तु को दोषः?
तत् श्रुत्वा कुपितेन राज्ञा दुर्वचनैः सा वधूस्तर्जिता. ततोऽन्यदा कोपातुरेण तेन राज्ञा तस्याः संगं चिंतयता
तस्य निजलघुभ्रातुः कंडरीकस्य मारणाय विषं दत्तं, यतः-दिवा पश्यति नो घूको। रात्रौ काको न पश्यति ॥
कामांध कोऽपि पापीयान् । दिवा रात्रौ न पश्यति ॥ १ ॥ अथैवं स्वकीये भर्तरि कंडरिके मृते सति सा
यशोभद्रा चिंतयति, नूनमयं पापी नृपोऽथ मे शीलखंडनं करिष्यति, ततोऽहं क्वचिदन्यस्थाने गत्वा निज-
शीलं रक्षामि. इति स्वमनसि विचिंत्य सा रात्रौ ततो निर्गत्य श्रावस्तीनगर्यां गता, तत्र च सुव्रताख्या-
यास्तपोधनायाः पोषधागारे स्थिता. तन्मुखाच्च धर्मोपदेशं निशम्य तस्याः संसारोपरि विरागो बभूव. ततश्च

सा तस्याः समीपे दीक्षां जग्राह. अथ तस्यां उदरे पूर्वसंभवो गर्भ आसीत्, परं व्रतांतरायभयात्तया तस्य महासत्या अग्रे स्वकीयं तत्स्वरूपं न निवेदितं. अथ तस्याः स निजपतिसंभवो गर्भोऽनुक्रमेण वृद्धिं प्राप. तदा तया महासत्या सुव्रतया तस्यै प्रोक्तं, वत्से किमेतत्? सा प्राह, भगवति! दीक्षाग्रहणाकांक्षया मयैष वृत्तांतो भवत्या न ज्ञापितः. ततस्तया प्रवर्तिन्या सा गुसवृत्त्या गीतार्थसुश्रावकगृहे मुक्ता, तत्र तस्याः पुत्रप्रसवो बभूव, तस्य पुत्रस्य च यशोभद्र इति नाम परिकल्पितं. क्रमेणाष्टवार्षिकश्च स गुरुभिर्दीक्षितोऽध्यापितश्च, यौवनकाले च स उन्मत्तीभूय विषयाभिलाषी जातः, तेन च स विंध्याचलं स्मरन्मदोन्मत्तः हस्तीव निरंकुशः परिभ्रमति, चित्तं विना च केवलं मुनिवेषं धारयति. यतः—हरिविंभपुरंदर—सुरनरनिवहाणिवि जिया जेण ॥ सो मयणो लद्धरसो । जेण जिओ तं जिणं नमह ॥ १ ॥ सव्वगहाण पभवो । महागहो सव्वदोसपावठिई ॥ कामग्गहो दुरप्पा । जेणभिभूयं जगं सव्वं ॥ २ ॥

इतश्चैकस्मिन्नवसरे तेन निजमातुरग्रे निवेदितं, मातर्न शक्नोम्यहं व्रतं पालयितुं, अतो निजे राज्ये यास्यामि, भजिष्यामि च तत्र गार्हस्थ्यं, भुक्तभोगश्च पुनर्वृद्धत्वे व्रतं ग्रहीष्ये, अधुना चाहं निजपितृव्य-

अशक्तोऽपि पुंडरीकपार्श्वे स्थितो राज्यं करिष्यामि. तत् श्रुत्वा माता प्राह, वत्स तर्हि ममैकं प्रार्थितं कुरु ?—
व्रतं कर्तुं । मम प्रार्थनयानया ॥ तिष्ट द्वादश वर्षाणि । पश्चात्कुर्याद्यथोचितं ॥१॥ तत् श्रुत्वा तेनापि मातु-
स्तद्वचनं प्रतिपन्नं. ततो द्वादशवर्षांते गुरुणया द्वादशवर्षाणियावत् स स्थापितः. ततो गुरुवाक्येन स
द्वादशवर्षाणि यावत्स्थितः. एवमष्टचत्वारिंशद्वर्षांते यावत्स ततो गंतुं लग्नः, तावत्तस्य माता तस्यैकं रत्न-
कंबलं ददौ. ततोऽसौ स्वपितृव्यपुंडरीकपार्श्वे गंतुं प्रवृत्तः, रजन्यां च साकेतपुरे प्राप्तः. अथ प्रातरहं भूपा-
लाग्रे यास्यामीतो विचिंत्य स रात्रौ कस्मिंश्चिद्देवकुले प्रेक्षणकं विलोकयन् स्थितः. इतस्तत्र भूपालादयो
बहवो लोकास्तत्प्रेक्षणकं विलोकयितुं समायाताः. तत्रैका मनोहरा नर्तकी लोकानामतीवानंददायकं नृत्यं
विद्धातिस्म. एवं रात्रिप्रहरत्रये व्यतिक्रांते सा नर्तकी खिन्ना. अथ तां खिन्नां दृष्ट्वा तस्या माता प्राह,
वत्से! बह्वो व्यतिक्रांते स्तोके च व्यतिकरेऽथावशिष्टे कथं त्वं खिन्ना सती निजांगं मोटयसि ? यतः—सुष्टु
गीतं त्वया सुष्टु । नर्तितं सुष्टु वादितं ॥ दीर्घरात्रिमतिक्रम्य । मा प्रमादीर्निशात्यये ॥१॥ एनं श्लोकं श्रुत्वा
स यशोधनस्तपोधनो वैराग्यपरो निजं रत्नकंबलं तस्यै ददौ. राजकुमारोऽपि तस्यै रत्नजटितं सुवर्णकुंडल-

मयच्छत्. तन्नगरवास्तव्या श्रीकांताभिधा श्रेष्ठीपत्नी च तस्यै निजं मौक्तिकहारं समर्पयामास. नृपस्य हस्तिपकश्च तस्यै निजं स्वर्णजटितमंकुशं ददौ. जयसिंहाभिधो मंत्री च निजहेमकटके अयच्छत्. एवं तस्यै नर्तक्यै तैर्दत्तानि लक्षमूल्यवस्तुनि दृष्ट्वा राज्ञो मनसि विस्मयो बभूव. एवं विस्मितेन राज्ञा मुनये तदनुचितदानकारणं पृष्टं. तदा स प्राह—यन्नानीतं मनः स्थाने । गुरुणाऽनायि तत्तया॥ सूर्यः खगं भिनत्त्येव। दीपिका भूरुहे तमः ॥ १ ॥ राजन्नेषा नर्तकी मे गुरुणीभूय सुगतिमयच्छत्, अतः कारणान्मया तस्यै मे रत्नकंबलं दत्तं. ततो राज्ञा सा श्रीकांता श्रेष्ठिनी पृष्टा, सापि वक्ति, राजन्मे मनसीति पूर्वं विचारोऽभूत्, यदहं स्वभर्तारं विनाश्यान्यं पतिं करिष्यामि, परमस्या नर्तक्या वाक्यान्ममापि प्रतिबोधो जातः. ततो राज्ञा स हस्तिपको दानकारणं पृष्टः. स आह, राजन्नहमन्यराज्ये गंतुकामोऽभूवं, तेन रणांगणे गजेंद्रारूढं त्वां वैरिभ्यः समर्पणोत्सुकश्चाभवं, परमस्या नर्तक्या वाक्यश्रवणतोऽहं तद्दुष्कृत्यात्प्रतिनिवृत्यास्यै नर्तक्यै गजांकुशमयच्छं. ततो राज्ञा पृष्टौ तावमात्यराजकुमारावबदतां, हे राजन्नावां त्वां विपाद्य राज्यग्रहणोत्सुकावभवाव, परमस्या वाक्यात्प्रतिबुद्धौ. आवश्यकेऽप्युक्तं-सुट्ठु गाईयं सुट्ठु। वाईयं सुट्ठु नच्चियं सामे ॥ अणुपालियं

दीहराइं । थोवंते मा पमायेहि ॥ १ ॥ एवं स राजा सर्वेषामाशयान्निशम्य सहर्षो बभूव, संसारासारतां च विज्ञाय प्रतिबुद्धः सः, विशेषतस्तपोधनदेशनया सर्वेऽपि ते प्रतिबुद्धाः. ततो राजा तं निजकुमारं राज्ये निवेश्य मुनिपार्श्वे च व्रतं गृहीत्वा निरतिचारं च चारित्रं पालयित्वा दिवमगमत्. स यशोभद्रो मुनिरपि गुरुपार्श्वे गत्वा स्वदुःकृतं च समालोच्य प्रतिक्रम्य च पुनश्चारित्रं पालयित्वा केवलज्ञानी बभूव, प्रांते च समाधिमरणपूर्वकं शिवं जगाम. अतः कारणात्–प्रस्तावे भणितं वाक्यं । प्रस्तावे दानसंगिनां ॥ प्रस्तावे वृष्टिरल्पापि । भवेत्कोटिफलप्रदा ॥ १ ॥

॥ अथ तीर्थस्नानेन पापापगमने विप्रकथानकं प्रारभ्यते ॥

स्तंभतीर्थे कश्चिदेको विप्रस्तीर्थयात्रिकसार्थे गंगादितीर्थयात्राकरणयियासुरभूत्. तदा तस्य चतुरया पत्न्या प्रोक्तं, स्वामिंस्तव सार्थेऽहमपि समागत्य तीर्थयात्रां करिष्ये. परं विप्रेण वह्वाग्रहेण सा गृहे स्थापिता: ततस्तया तत्प्रतिबोधार्थं कटुतुंबिकैका तस्य समर्पिता, प्रोक्तं च, यत्र यत्र तीर्थे यूयं स्नानं कुरुथ तत्र

तन्निषा तुंबिकापि युष्माभिस्तत्तीर्थजले स्नाप्या, सोऽपि तथेति प्रतिपद्य तां कटुतुंबिकामादाय ततश्चलितः. ततः स क्रमेणाष्टपष्ठितीर्थयात्रां विधाय निजगृहे समागतः. सबहुमानं मिलितश्च तत्र स्वजनवर्गः, तेन प्रोक्तं तीर्थयात्रावृत्तांतं च निशम्य सकलोऽपि स्वजनवर्गस्तस्य प्रशंसां विधाय तं च धन्यं मन्यमानो स्वस्वस्थानं ययौ. ततस्तेन विप्रेण हर्षपूर्वकं तां तुंबिकां दत्वा प्रोक्तं, प्रिये! मयैषा तुंबिका त्वत्कथनानुसारेण सर्वेष्वपि तीर्थेषु तत्तत्तीर्थजलेन स्नपितास्ति. ततः स विप्रोऽप्यतीव हृष्टो निजमित्रादिमिलनार्थं बहिर्गतः. अथ तया चतुरया विप्रपत्न्या तत्प्रतिबोधार्थं तां तुंबिकां संस्कृत्य तस्याः पलेवः कृतः. भोजनावसरे स विप्रोऽपि गृहे समागत्य भोक्तुमुपविष्टः. अथ तया परिवेषितं तत्कटुतुंबिकापलेवं विषप्रायं विज्ञाय कोपातुरः स विप्रः प्राह, अरे दुष्टे! दुराचारिणि! त्वया किमेतत्कृतं? तया प्रोक्तं स्वामिन्! एषा कटुतुंबिकापि मया तु सकलतीर्थस्नानेनामृतमयीभूता ज्ञाता, तेन मया तत्पलेवं कृत्वा युष्माकं भोजनाय परिवेषितः. तत् श्रुत्वा स विप्रोऽपीषद्विहस्य प्राह, भो मुग्धे! तत्तुंबिकामध्यस्थं कटुकत्वं तु तीर्थस्नानेनापि न शुद्ध्यति. तदा तत्पत्न्या प्रोक्तं, स्वामिन्! सर्वदा दुराचरणपरराजप्रतिग्रहमृतश्राद्धादिभोजनयज्ञवि-

हितजीवहिंसादिसमुद्भवं पापं तीर्थस्नानेन तर्हि कथं प्रयातीति प्रतिबोध्य स तया सम्यग्धर्मं ग्राहित'. एवं स द्विजोऽपि तस्या निजपत्न्याः परमोपकारं मन्यमानः सम्यग् जिनधर्मं पालयन् प्रांते सुगतिभाग्बभूव.

॥ इति तीर्थस्नानेन पापापगमे विप्रकथा समाप्ता ॥

॥ अथौचित्ययुक्तवचनोक्तौ विप्रकथा प्रारभ्यते ॥

एकत्रौचित्यवचन-मेकतो ग्रंथकोटयः ॥ पश्यौचित्यगिरा लेभे । वंधमोक्षं स माधवः ॥ १ ॥ काशीपुर्यां माधनाख्यो द्विज एको दुर्गतो दुर्भगो दरिद्रश्चासीत्, तेन स लोकानामसुखावहो बभूव. लोकैश्च सर्वत्रैवं कथ्यते, योऽस्य माधवविप्रस्य मुखं प्रभाते विलोकयिष्यति, तस्य नूनं मध्याह्नानंतरमेव भोजनं भविष्यति. एवं सा वार्ता शनैः शनैस्तन्नगरनृपस्याग्रे प्राप्ता. तदा स राजा लोकांस्तर्जयित्वा सक्रोधः प्राह, अरे! दुष्टा नगरलोका नूनं मृपाभापिणः संति, मुधैव तस्य निरपराधस्य माधवद्विजस्य दूपणं यच्छंति. अथ श्वोऽहमेव तस्य द्विजस्य मुखं दृष्ट्वा प्रातरेव भोक्ष्ये. एवं लोकवार्तां मृपाकरणाय स राजा प्रातरेव तस्य विप्रस्य मुखं

दृष्ट्वा स्वयं भोक्तुमुपविष्टः. एवं यावत्स भोजनस्य प्रथमं कवलं गृह्णाति, तावदकस्मान्निपादिभिरागत्य तस्य पट्टहस्तिमरणं निवेदितं. तत् श्रुत्वा शोकातुरः स नृपो मुमूर्छ. मूर्छानंतरं स तत उत्थाय हाहारवपरो मृतहस्तिसमीपे गतः तदनंतरं कथंचिद्विगतशोकः सोऽतीवाग्रहेण मंत्रिभिः संध्याकाले भोजितः. अथ द्वितीयदिने मंत्रिप्रभृतिभिस्तद्ब्राह्मणमुखदर्शनफलं स्मारितोऽसौ नृपः कथयामास, नूनं लोकोक्तिः सत्यैव, यो दुर्भगो द्विजो ममाप्येवं बाधाकारको जातः, स लोकानां कथं न पीडयिष्यति? अत एनं दुर्गतं द्विजं शूलाधिरूढं कुरुत? अथैवं नृपादिष्टाः सुभटा यावत्तं माधवं द्विजं बध्ध्वा वधस्थाने नयंति, तावत्तेनोक्तं, नाहमेकाक्येवमेवंविधः, इत्युक्त्वा स हसतिस्म. सुभटैश्च तैस्तदुक्तं तस्य हसनं च राज्ञे ज्ञापितं, तदा कौतुकार्थं स राजा तं पश्चान्निजसमीपे समाहूय तत्कारणं पप्रच्छ. तदा स माधवो द्विज उवाच, राजन्! नूनं त्वं मत्तोऽप्यधिकनिःकृष्टो मया ज्ञातः, अतोऽहं नैकाक्येव निःकृष्टः, यतो मदीयमुखं दर्शनस्तव विकाले भोजनं जातं, मम तु त्वदीयमुखदर्शनादेवं मरणमेव जायमानमस्ति. तत् श्रुत्वा रंजितो राजा तं द्रव्यादिना सत्कृत्य मुमोच. ॥ इत्युचितवचनोक्तो माधवद्विजकथा ॥

॥ अथ कृतकर्मफलोपभुक्तो कार्पटिककथा प्रारभ्यते ॥

कश्चिदेकः कार्पटिकः सोमेश्वरयात्रायां व्रजन् पथि कस्मिंश्चिद्ग्रामे कस्यचिल्लोहकारस्योकसि रात्रौ सुप्तः. अथ तस्य लोहकारस्य पतिद्वेषिणी भार्या स्वपतिं निहत्य रुधिरलिप्तां कृपाणिकां प्रच्छन्नरीत्या तस्य सुप्तस्य कार्पटिकस्य पार्श्वे निधाय कोलाहलं कृत्वा रुदितुं प्रवृत्ता. तस्या आर्त्तनादं श्रुत्वाऽरक्षकैस्तत्रागत्य तस्य निरपराधिनः कार्पटिकस्य करौ छिन्नौ. तदा स कार्पटिको रुदन् दैवमुपालब्धुं प्रवृत्तः. तदा तेन दैवेनापि निशि प्रकटीभूय तस्य प्रोक्तं, भो कार्पटिक! त्वं वृथा रुदनं मा कुरु? तव प्राग्भवं च शृणु? पूर्वभवे तवैको भ्राता अजमारणायोद्यतो बभूव. तदा त्वया तस्याजस्य कर्णौ धृतौ, तव बंधुना च सोऽजः शस्त्रिकया व्यापादितः. एवं सोऽजो मृत्वेयं लोहकारस्य योषिज्जाता. स तव बंधुरपि कालांतरे मृत्वा तस्याः पतिरभूत्, त्वमपि च मृत्वा कार्पटिको जातः. अथैवं क्रमेण भवतां त्रयाणामप्यत्र संयोगोऽभवत्. पूर्वभववैरेण द्विष्टया तया निजस्वामी व्यापादितः, त्वयापि च निजकरच्छेदनरूपं तत्कर्मफलं लब्धं. अथैवं निजकृततकर्मफलं भुंजानस्त्वं वृथा मां कथमुपालभसे? इत्युक्त्वा सोऽदृश्यो बभूव. ॥ इति ॥

॥ अथ बुद्धेरुपरि अजायाः कथा प्रारभ्यते ॥

कश्चिदरण्ये महदजायूथं चरित्वा सर्वदा संध्यासमये ग्राममध्ये समायाति. इतश्चैकदैकः सिंहस्तदजायूथं हंतुं समागच्छन् यूथपेन दृष्टः, तदा तेन तत्सकलमपि यूथं द्रुतमेव ग्राममध्ये समानीतं. परमेका खंजा अजा द्रुतं चलितुमशक्ता वनमध्ये पश्चात्स्थिता. तां हंतुं यावत्स सिंहः समागच्छति, तावत्तमायांतं वीक्ष्य साजापि तस्य सन्मुखमचलत्. खंजंतीं च तां सन्मुखमागच्छंतीं वीक्ष्य चकितः स सिंहो निजमनसि दध्यो, नूनमेषा कापि राक्षसी अजारूपं विधाय मामेव हंतुं समागच्छंती विलोक्यते. यदि सा सत्यैवाजा भवेत्तदा मदीयदर्शनत एव नश्येत्, परमियं तु मम सन्मुखमेव समायाति! इति विचिंत्य सिंहो भयेन दूरमेव स्थित्वा तां पप्रच्छ, कासि त्वं? सा प्राह—सप्त सिंहा मया जग्धा। नव व्याघ्रास्त्रयो गजाः ॥ एकं सिंहं वने नष्टं। हंतुमत्रागतास्म्यहं ॥ १ ॥ एतद्वचनं श्रुत्वा स सिंहस्तत्क्षणमेव ततो नष्टः. एवं स्वबुद्धिप्रपंचेन सा छागी कुशलेन निजग्राममध्ये समायाता. ॥ इति अजाकथा समाप्ता ॥

॥ अथ वचनागुप्तौ कुंभकारिणीकथा प्रारभ्यते ॥

कस्मिंश्चिद्ग्रामे काचिदेका कुंभकारिणी वसतिस्म. सा चौरभीत्या. निशायां निजाभरणानि गृहांगणे मृत्तिकानिकराधः सर्वदा गोपयित्वा स्थापयति. निद्रावसरे च सर्वदा पठति, यथा–सुखे सुवेइ कुंभारडी। चोर न मटीयां लेइ ॥ खूणे वांधी गादही । वारइ त्राटी देई ॥ १ ॥ एवं सा सर्वदा महता स्वरेण पठित्वा सुखेन निद्रां करोति. तद्गृहनिकटे वसन् कोऽपि धूर्तश्चौरः सर्वदा तयोक्तानि तानि वचनानि शृणोति; अथैकदा तेन धूर्तेन चौरेण चिंतितं, इयं कुंभकारी नित्यमेवेत्थं पठति, ततोऽस्या एतत्पठने कोऽपि हेतुर्विलोक्यते; नूनं सा निजमृत्तिकासमूहे धनं गोपयित्वा स्थापयति, अतो रात्रौ प्रच्छन्नं मया तस्या मृत्तिकेव विलोकनीया. इति विचिंत्य रात्रौ तस्यां सुप्तायां तेन धूर्तेन प्रच्छन्नं तत्रागत्य सा मृत्तिकैव विवृत्य विलोकिता, तदा तन्मध्यात्तस्याः स्वर्णाभूषणानि गृहीत्वा स धूर्तो निजगृहे समेत्य सुखेन निद्रामकरोत्. अथ प्रभाते जाग्रता सा कुंभकारी निजांगणस्थं तं मृत्तिकासमूहं विरलीभूतं विलोक्य स्वाभूषणान्यपि तत्रानवलोक्य विलपंती निजवचनाऽगुप्तिं निंदतिस्म. ॥ इति वचनाऽगुप्तौ कुंभकारीकथा समाप्ता ॥

॥ अथ दुर्वचनविषये विप्रकथा प्रारभ्यते ॥

कोऽपि मारवो दुर्मुखो विप्रः काश्यां विद्याध्ययनं विधाय निजगृहंप्रति चलितः, मार्गे कापि ग्रामे भिक्षार्थं भ्रमन् कस्या अपि कौटुंबिन्या गृहे प्राप्तः, तयापि दयया तस्मै विप्राय क्षिप्रचटिका दत्ता, रंधनार्थं चेंधनानि मृत्तर्पणिकापि च प्रदत्ता. तदा स विप्रोऽपि तस्याः कौटुंबिन्या वाटके स्थितस्तद्दत्तां क्षिप्रचटिकां पचतिस्म. अथ तस्मिन् वाटककोणदेशे तस्याः कौटुंबिन्याः पुष्टशरीरका मनोहरा महिषी तृणादीनि भक्षयंती स्थिताभूत्. ततोऽर्धपक्वायां क्षिप्रचटिकायां तस्य पठितमूर्खस्य विप्रस्य हृदये तर्कोऽभूत्, अरे! अस्याः कौटुंबिन्या देहलीद्वारं संकटतरं विद्यते, अतश्चेयं महिषी यदा मरिष्यति, तदा संकटतरादस्माद् द्वारतः कथं सा बहिर्निष्कासयिष्यते? इति वितर्क्य तेन दुर्मुखेन विप्रेण तस्याः स्वकीयः स वितर्को वचनतो निवेदितः. तदा रुष्टया तया प्रोक्तं, रे दुष्ट! त्वमधुनैवेतो निस्सर? इत्युक्तोऽसौ दुर्मुखः पठितमूर्खो विप्रः स्तामर्धपक्वां क्षिप्रचटिकां निजोत्तरीये क्षिप्त्वा ततश्चलितः. तदा तदुत्तरीयाञ्चलाच्छ्रावणं दृष्ट्वा हास्यपरैः लोकैः पृष्टः स प्राह, भो लोकाः! अयं मदीयमुखरोगः श्रवति. इत्युक्त्वा तेन स्वीकीयदुर्वचनवृत्तांतो लोका-

नामग्रे निवेदितः. तत् श्रुत्वा लोकैः प्रसभं प्रहस्यमानः स तं ग्रामं मुक्त्वाग्रे चचाल. ॥ इति दुर्वचनः विषये दुर्मुखविप्रकथा ॥

॥ अथ पित्रादिभक्तिव्यवहारशुद्ध्यादिविषये मोचिककथा प्रारभ्यते ॥

कस्मिंश्चिद्ग्रामे एको विप्रो वसतिस्म. स प्रतिवर्षं तीर्थयात्रार्थं गंगांप्रति गच्छति. गंगाभक्ता बहवो जनाश्च तत्र तीर्थे शुभमार्गे व्ययार्थं स्वकीयं धनं तद्धस्ते समर्पयंति. सोऽपि तत्र गतोऽनाथदीनादिभ्य-स्तद्धनं प्रयच्छति; स्वयमपि गंगास्नानादिना निजात्मानं पवित्रीभूतं मन्यमानः पश्चान्निजगृहे समायाति. अथैकदा तत्र वास्तव्येनैकेन मोचिकेन (चर्मकारेण) तस्य विप्रस्य तत्र तीर्थे व्ययार्थं कियद्धनं समर्पितं, कथितं च यदि गंगा स्वयं निजहस्तं प्रसार्यैतन्मदीयं धनं गृह्णीयात्तदा त्वया तस्यै समर्पणीयं अन्यथा न. एतन्निशम्य निजमनसि विस्मितः स द्विजो विचारयति, इयत्कालं गंगया स्वहस्तं प्रसार्य कदाप्यपि मत्तो नूनं कस्यापि धनं गृहीतं नास्ति, अयं चर्मकारश्चैवं वदति, अतो मयैतत्कौतुकं ध्रुवं विलोकनीयमेव. इति

विचिंत्य स तत्र गतो मोचिकार्पितं तद्धनं निजकरे समादायोवाच, भो मातर्गंगे! मदीयग्रामवास्तव्येनामुकेन मोचिकेनेतद्धनं मदीयहस्तेन तुभ्यं समर्पणाय प्रेषितमस्ति, परं तेन मह्यं कथितमस्ति, यदि गंगा स्वहस्तं प्रसार्य गृह्णीयात्तदा त्वया तस्यै चेतन्मदीयं धनं समर्पणीयं, अन्यथा न. तत्कथनानंतरं तूर्णमेव गंगाप्रवाहतः स्वर्णजटितरत्नाद्याभूषणालंकृतो गंगाया हस्तो बहिर्निःसृतः. तं हस्तं दृष्ट्वातीवविस्मितः स द्विजस्तस्मिन् हस्ते तद्धनं समर्प्य प्रोवाच, हे मातर्गंगे! प्रतिवर्षमहमत्र त्वदीययात्रार्थं समागच्छामि; पुण्यार्थं मदीयं परकीयं च भूरिद्रव्यं व्ययामि, परं त्वया कदापि निजहस्तं प्रसार्य गृहीतं नास्ति, अथाद्य तस्य हीनजातीयस्यापि चर्मकारस्य द्रव्यं स्वहस्तं प्रसार्य ग्रहणे को हेतुः? तेनेत्युक्ते गंगा निजदिव्यरूपं प्रकटीकृत्य प्राह, भो द्विज! अहं शुद्धभावयुक्तभक्त्या सदाचरणेन च प्रिये, परं न वाह्यवृत्त्या, यतः—परदारपरद्रोह–परद्रव्यपराङ्मुखः ॥ गंगाप्याह कदागत्य । मामयं पावयिष्यति ॥ १ ॥ इत्याद्युक्त्वा यावत्सा गंगा स्थिता, तावत्सोऽत्यंतं चकितो द्विजः पप्रच्छ. भो मातस्तस्य चर्मकारस्याप्येवंविधा का शुद्धक्रियास्ति? तेनेत्युक्ते गंगया प्रोक्तं, भो द्विजोत्तम! तत्र गत्वा त्वं स्वयमेव तदाचरणं विलोकयेः, इत्युक्त्वा

गंगा तिरोऽधत्त. अथ निजमनस्यतीवचमत्कृतः स द्विजस्तूर्णं पश्चान्निजग्रामे समागत्य तस्य चर्मकारस्य मातापित्रोर्भक्तिं शुद्धाचरणादि च विलोक्य हृष्टस्तस्मै कथयामास, भो पुरुषोत्तम! त्वदीयं धनं गंगया स्वहस्तं प्रसार्य गृहीतं, त्वदुत्तमाचरणप्रशंसा च सत्यैव कृता. इत्युक्त्वा तस्मै धन्यवादं दत्वा स द्विजो निजगृहे ययौ ॥ इति मातृपितृभक्तिव्यवहारशुध्ध्यादिविषये मोचिककथा समाप्ता ॥



॥ अथ प्रस्तावोक्तिविषये यशोभद्रकथा प्रारभ्यते ॥

कस्मिंश्चिन्नगरे कोऽपि लघुकूर्चो बालो राजा राजपाटिकार्थं गच्छन् हट्टश्रेणौ समायातः. तावता हट्टस्थितेन केनापि यशोभद्राभिधेन यूना वणिजा स्वकीयं स्थूलं कूर्चं निजहस्तेन स्पृष्टं. तद् दृष्ट्वा तेन बालेन नृपेण चिंतितं नूनमयं वणिग मदीयं लघुकूर्चं दृष्ट्वाऽहंकारेण स्वकीयं स्थूलं कूर्चं स्पृशति. इति शंकया तेन बालेन राज्ञा रोषतस्तं धृत्वा चौरदंडं कारयितुं तलारक्षकाणां स समर्पितः. तदा बुद्धिवता समयज्ञेन च तेन वणिजा निजजीवितरक्षार्थं तस्य नृपस्य पादयोः पतित्वा प्रोक्तं, स्वामिन्! मदीयं स्थूलं कूर्चं स्पृ-

शता मयैवं चिंतितं, यदेष नृपो लघुकूर्चोऽपि सकलजनोदरभरोऽस्ति, अहं च दीर्घकूर्चोऽपि स्वोदरमपि कष्टेन भर्तुं शक्तोऽस्मि, एवं स्वं कूर्चं निंदता सता मयैतत्स्पृष्टं. एवंविधानि तस्य वचनानि श्रुत्वा संतुष्टेन राज्ञा स जीवन्मुक्तो वस्त्राभूषणादिभिश्च परिधापितः. ॥ इति प्रस्तावोक्तिविषये यशोभद्रवणिक्कथा समाप्ता ॥

॥ इति धर्मोपदेशकर्णिका समाप्ता ॥ ॥ श्रीरस्तु ॥